the two hundred and nineteenth chapter of the Matsyapurana Laksmidhara realizes the supreme importance of the safety of the king—the prominent organ of State and quotes in toto this exhaustive discourse

The main dread to the king's personal safety originates from poisoning against which the king should well guard himself The means of protection from poisoning are vividly described in books on polity Laksmidhara quotes extracts from Matsyapurana on this subject

Poison is often administered through food Matsyapurana lays down some rules for examining such food mixed with poison It is said that the food mixed with poison will exhibit rainbow colour, look rough with bubbles, give out bad smell, make an explosive noise and headache to a person by its fume when put into the fire A fly will not sit and if it does, it will instantly die The poisoned stuff in a somewhat long time becomes rancid like anything kept for a fortnight It begins to stink and ooze Then it becomes juiceless and scentless

Poison changes the colour of the object into which it is mixed for instance, poisoned grain becomes copper coloured, milk turns blue, wine and water become of the colour of cuckoo, rice becomes blackish, bluish or yellowish, clarified butter becomes watery and poisoned matter becomes of the colour of a pigeon, fly turns green, oil gets red and raw fruits by coming in contact with poison become untimely ripe, ripe ones go stale, garlands get faded, hard fruits become soft and soft ones turn hard, small fruits become disfigured.

Poisoned clothes lose their flush and become covered with black circular spots and iron and gems turn pale

Poisoned flowers and sandal give most disagreeable smell and the bark of the tooth-stick becomes black and gets thin

S'āka when poisoned dries up and watery dishes begin to bubble and the stuff prepared with Saindhava salt begins to froth.

In the discovery of the fact whether a particular substance of food is mixed with poison or not, the birds and beasts are the best helpers. Different birds form up different attitudes at the sight of poisoned substance; for example the sight of cakora becomes fixed and the cuckoo loses its melody, the crane moves abrupt, black bees begin to buzz, Krauñca becomes stupefied, cocks begin to cry, parrots shrill, the female parrots begin to vomit, Cāmīkara goes to another place, Kāraṇḍava instantly dies, monkey begins to make water, Jīvajīvaka becomes morose, mongoose shoots up its hair, Pṛṣata deer begins to cry, peacocks become pleased.

Works on polity have laid down some ways of judging the people guilty of poisoning. According to Matsyapurāṇa the person who administers poison in king's food etc., turns pale and very much confused, and uneasy when examination is being made.

His sight becomes restless; he becomes absent-minded; he will drop his upper cloth in confusion, will turn speechless like a wall, agitated, nervous and will try to conceal his person, scratch the floor, shake his head, rub his mouth and scratch his forehead and will be hasty in everything where haste ought not to be done. The king should find out by these sights the men who administer poison.

Chapters XVI—XXII.

Chapters XVI—XXII deal respectively with the direction for the performance of an idol procession, a festival in honour of Kārtikeya held on the full moon of the ninth day of the bright half of Ā'svina, a festival in honour of Indra, worship of Goddess Durgā on the ninth day of the bright half

# श्रीमद्गोविन्दचन्द्रमहाराजसान्धिविग्रहिकश्रीलक्ष्मीधरभट्ट-विरचिते कृत्यकल्पतरौ राजधर्मकाण्डः ।

श्रीसिद्धिविनायकाय नमः ।

न्याय्ये वर्त्मनि यज्जगद्गुणवता गेहेषु यद्दन्तिनो
राज्ञां मूर्धनि यत्पदं व्यरचयद् गोविन्दचन्द्रो नृपः ।
तत्सर्वं खलु यस्य मन्त्रमहिमाश्चर्यं स लक्ष्मीधरः
काण्डे शास्ति राजधर्मनिचयानेकादशे पुण्यधीः ॥ १ ॥
राजप्रशंसा प्रथममभिषेको गुणास्ततः ।
अमात्या अथ दुर्गाणि वास्तुकर्मविधिस्ततः ॥ २ ॥
राष्ट्रसंग्रहणं कोशो दण्डो मित्रं ततः पुनः ।
राजपुत्राभिरक्षा च मन्त्रः षाड्गुण्यमेव च ॥ ३ ॥
यात्राभिषिक्तकृत्यानि देवयात्राविधिस्ततः ।
महोत्सवश्च कौमुद्या ध्वजोच्छ्रायविधिस्ततः ॥ ४ ॥
महानवम्यां पूजा[1] च विधिरिन्द्रमहस्य चाप्यथ ।
गवोत्सर्गो वसोर्धारा पर्वाण्येकादशे क्रमात् ॥ ५ ॥

## अथ राजप्रशंसा (१)

तत्र मनुः[2]—

राजधर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृपः ।
सम्भवश्च यथा तस्य सिद्धिश्च परमा यथा ॥ ६ ॥
अराजके हि लोकेऽस्मिन् सर्वतोऽभिद्रुते[3] भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥ ७ ॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥ ८ ॥

---

१ पूज्या for पूजा C २ Manu smrti, edited by G S'astri Benares, 1935 VII 1, 3 7 ३ विद्रुत for अभिद्रुत इति मुद्रितमनुस्मृतौ

यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ ९ ॥
तपत्यादित्यवच्चैष चक्षूंषि च मनांसि च ।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥ १० ॥
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट् ।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः ॥ ११ ॥

नारदः[1]—

पञ्च रूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च ॥ १२ ॥
कारणाग्निर्निमित्तं वा[2] यदा क्रोधवशं गतः ।
प्रजा दहति भूपालस्तदाग्निरभिधीयते ॥ १३ ॥
यदा तेजः समालम्बेद्विजिगीषुरुदायुधः[3] ।
अभियाति परान् राजा तदेन्द्रः समुदाहृतः[4] ॥ १४ ॥
विगतक्रोधसन्तापो हृष्टरूपो यदा नृपः ।
प्रजानां दर्शनं याति सोम इत्युच्यते तदा ॥ १५ ॥
धर्मासनगतः श्रीमान् दण्डं धत्ते यदा नृपः ।
समः सर्वेषु भूतेषु तदा वैवस्वतो[5] यमः ॥ १६ ॥
तदा स्वर्थिगुरून्[6] प्राज्ञान्[6] भृत्यादीन् पृथिवीपतिः ।
अनुगृह्णाति दानेन तदा धनद उच्यते[7] ॥ १७ ॥

मनुः[8]—

इन्द्रस्यार्कस्य वातस्य[9] यमस्य वरुणस्य च ।
सोमस्याग्नेः[10] पृथिव्याश्च तेजोवृत्तं नृपश्चरेत् ॥ १८ ॥
वार्षिकांश्चतुरो मासान् यथेन्द्रोऽभिप्रवर्षति ।

---

१. Institutes of Nārada or Nāradasmṛti, Ed. by Jolly Calcutta, 1885. XVII. 26-31. २. ०दनिमित्तं वा for ०ग्निर्निमित्तं वा इति मु० ना० ३. समालम्ब्य वि for समालम्बेद्वि० इति मु० ना०. ४. स उदा० for समुदा० इति मु० ना०. ५. ०स्वतः स्मृतः for स्वतो यमः इति मु० ना० ६. गुरुप्राज्ञभृ० for गुरून्प्राज्ञान्भृ० इति मु० ना० ७. स धनदः स्मृतः for धनद उच्यते इति मु० ना०. ८. Manu IX. 303-311. ९. वायोश्च for वातश्च इति मु० ना०. १०. चन्द्रस्या० for सोमस्या० इति मु० म०.

तथाभिवर्षेत्तद्राष्ट्रं[1] कामैरिन्द्रव्रतं चरन् ॥ १९ ॥
अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः ।
तथा हरेत्करं राष्ट्रात्सम्यगर्कव्रतं[2] हि तत् ॥ २० ॥
प्रविश्य सर्वभूतानि यथा चरति मारुतः ।
तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥ २१ ॥
यथा यम प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।
तथा राज्ञा नियन्तव्य.[3] सर्वस्तद्धि यमव्रतम् ॥ २२ ॥
वरुणेन यथा पाशैर्बद्ध एव[4] हि दृश्यते ।
तथा पापान्निगृह्णीयाद् व्रतमेतद्धि वारुणम् ॥ २३ ॥
परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ।
तथा प्रकृतयो यस्मिन् स चान्द्रव्रतिको नरः ॥ २४ ॥
प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्मसु ।
दुष्टसामन्तहिंस्रश्च तदाग्नेय व्रतं स्मृतम् ॥ २५ ॥
यथा सर्वाणि भूतानि धरा धारयते समम् ।
तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ॥ २६ ॥

नारदः—

अनादिश्चाप्यनन्तश्च द्विपत्तं पृथिवीपतिः ।[5]
*दीप्तत्वाच्च शुचित्वाच्च यथसौ न पथश्च्युत*[6] ॥ २७ ॥
अशुचिर्वचनाद्यस्य शुचिर्भवति पूरुषः[7] ।
शुचिश्चैवाशुचिः सद्य[8] कथं राजा न दैवतम्[9] ॥ २८ ॥
तस्मात्त' नावजानीयान्नाक्रोशेन्न[10] विशेषयेत्[10] ।
आज्ञायां तस्य[11] तिष्ठेत्तु[11] मृत्यु स्यात्तद्व्यतिक्रमात् ॥ २९ ॥[12]
आज्ञा[13] तेज' पार्थिवाना सा च वाचि प्रतिष्ठिता ।

१. स्वं राष्ट्रं *for* तद्राष्ट्रम् इति मु० म० २ *नित्यम् for सम्यक्* इति मु० म० ३. नियन्तव्या. प्रजा for नियन्तव्य सर्व इति मु० म० ४ एवाभि० for एव हि इति मु० म० ५ This line is not found in Naradasmrti ६ XVII. 12. c-d ७ मानवः for पूरुष. मु० ना० ८. सम्यक् for सद्यः इति मु० ना० ९ XVII 52 १० ०क्रोशेच विशेषन. for ०क्रोशेन्न विशेषयेत् इति मु० ना०. ११ चास्य तिष्ठेत for तस्य तिष्ठेत्तु इति मु० ना १२ XVII 32 १३ प्रज्ञा for आज्ञा इति मु० ना०

स[1] यद् ब्रूयादसत्सद्वा स धर्मो व्यवहारिणाम् ॥ ३० ॥
राजनाम[2] चरत्येषु भूमौ साक्षात्सहस्रदृक् ।
न तस्याज्ञामतिक्रम्य प्रतिष्ठेरन्निमाः[4] प्रजाः[4] ॥ ३१ ॥[5]
रक्षाधिकारादीशत्वाद्भूतानुग्रहदर्शनात् ।
यदेव कुरुते राजा तत्प्रमाणमिति स्थितिः ॥ ३२ ॥[6]
निर्गुणोऽपि[7]यथा स्त्रीणां पूज्य एव पतिः सदा ।
प्रजानां [8]निर्गुणोऽप्येवं पूज्य एव नराधिपः[9] ॥ ३३ ॥[10]
राज्ञामाज्ञाभयाद्यस्मान्न च्यवन्ते[11] पथः प्रजाः ।
व्यवहारस्ततो[12] ज्ञेयः[13] शंसतो[14] राजशासनम् ॥३४॥[15]
स्थित्यर्थं पृथिवीपालैश्चारित्र[16]विषयः कृताः ।
चारित्रेभ्योऽप्यतः [17] प्राहुर्गरीयो राजशासनम् ॥३५॥ [18]
तपःक्रीताः प्रजा राज्ञः[19] प्रभुरासां तथा[20] नृपः ।
तस्मात्तद्वचसि स्थेयं वार्ता तासां[21] तदाश्रया ॥३६॥[22]

चारित्रविषयः = राजकृता भागादिव्यवस्थाप्रकाराः । राजशासनम् = राजाज्ञा ।
वार्ता—कृषिपाशुपाल्यादिवृत्तिः ।

मनुः[23]—

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ३७ ॥
एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।

---

१. ते यद्ब्रूयुरस० for स यद्ब्रूयादस० इति मु० ना०. २. XVII. 19. ३. राजेति सञ्चरत्येष for राजनाम चरत्येषु इति मु० ना० ४. संतिष्ठेरन्प्रजाः क्वचित् for प्रतिष्ठेरन्निमाः प्रजा इति मु० ना० ५. XVII. 20. ६. XVII. 21. ७. निर्बलोऽपि for निर्गुणोऽपि इति मु० ना० ८. विगुणो० for निर्गुणो० इति मु० ना० ९. प्रजापतिः for नराधिपः इति मु० ना० १०. XVII 22 ११. च्यवेरन् for च्यवन्ते इति मु० ना०. १२. ०रादतो for ०रस्ततो इति मु० ना०. १३. ज्ञेयम् for ज्ञेयः इति मु० ना०. १४. संवृत्तम् for शंसतः इति मु० ना० १५. XVII. 23. १६. चरित्र for चारित्र० इति मु० ना०. १७. चरित्रेभ्योऽस्य तत् for चरित्रेभ्यो-ऽप्यतः इति मु० ना०. १८. XVII. 24. १९. राज्ञा for राज्ञः इति मु० ना०. २०. ततः for तथा इति मु० ना०. २१. चासाम् for तासाम् इति मु० ना०. २२. XVII. 25. २३. VII. 8—13.

कुलं दहति राजाग्निः सपशुद्रव्यसञ्चयम् ॥ ३८ ॥
कार्यं [1]चावेक्ष्य शक्तिं च देशकालौ च तत्त्वतः ।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः ॥ ३९ ॥
तस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ ४० ॥
तं यस्तु द्वेष्टि सम्मोहात्स विनश्यत्यसंशयम् ।
तस्य [2]त्वाशु विनाशाय राजा प्रकुरुते मनः ॥ ४१ ॥
तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।
अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥ ४२ ॥

दण्डानुवृत्तौ मनुः[3]—

देशकालौ [4]च शक्तिं च विद्यां चावेक्ष्य शक्तितः ।
यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्तिषु ॥ ४३ ॥
स राजा पुरुषो दण्डः स नेता शासिता च सः ।
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ॥ ४४ ॥
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ ४५ ॥
समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥ ४६ ॥

राजेत्यनुवृत्तौ गौतमः[5]—

[6]तमुपासीनमधस्तादुपासीरन्नन्ये [7]ब्राह्मणेभ्यः ॥ तेऽप्येनं मन्येरन् ॥[8]

बृहस्पतिः—

बलेन चतुरङ्गेण यतो रञ्जयति प्रजाः ।
दीप्यमानः स वपुषा तेन राजाऽभिधीयते ॥ ४७ ॥

अङ्गिराः—

गुरुत्वेन भूपालः पापदण्डेन भूयसा ।
सत्करोत्यवनाचैर तेनासौ गुरुरुच्यते ॥ ४८ ॥

---

१ सो० for चा० इति मु० म० २ ह्या० for त्वा इति मु० म० ३ VII. 16—19 ४. त देशकालौ for देशकालौ च इति मु० म० ५ Dharmasutras of Gautama, Poona 1910 ६ ०मुपर्यासीन० for ०मुपासीन० इति मु० गौ० ७. XXII 11 7 = XXII 11 8

पापम्=पापकारिणाम् । अवनात्=रक्षणात् ॥

श्रीरामायणे[1]—

नाराजके जनपदे योगः क्षेमं[2] प्रवर्त्तते ।
नचाप्यराजके सेना शत्रून् विषहते परान्[3] ॥ ४९ ॥[4]
विपालाश्च यथा गावो यथा चातृणकं वनम् ।
अजलाश्च यथा नद्यस्तथा राष्ट्रमराजकम् ॥ ५० ॥[5]
अन्धं तम इवेदं स्यान्नेह ज्ञायेत किञ्चन ।
राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥ ५१ ॥[6]

इति राजप्रशंसा ॥

## अथाभिषेकः ( २ )

तत्र ब्रह्मपुराणे[7]—

सुतिथौ च सुनक्षत्रे स्नानं नक्षत्रनामकम् ।
मुहूर्ते सगुणोपेते सर्वोत्पातविवर्जिते ॥ १ ॥
स्थिरे राशौ शुभयुते केन्द्रे चोपचयान्विते ।
( कश्मीरायां तु पार्वत्यां शङ्करात्मा महीपतिः । )[8]

---

१. Rāmāyaṇa, Bombay 1913. २. योगक्षेमः for योगः क्षेमम् इति मु० रा०. ३. युधि for परान् इति मु० रा० ४. Ayodhyākāṇḍa 67. 24. ५. Ibid. 67. 29. It reads यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम् । अगोपाला यथा गावस्तथा राष्ट्रमराजकम्. ६. Ibid. 67. 36. It reads अहो तम इवेदं स्यान्न प्रज्ञायेत किञ्चन । राजा चेन्न भवेल्लोके विभजन्साध्वसाधुनी. ७ The following extracts alleged to be taken from Brahmapurāṇa are not found in the extant published Brahmapurāṇa. However these passages are found with slight variations in Mitramis'ra's Rājanītiprakās'a (P. 43) and Anantadeva's Rājadharmakaustubha (P. 326). Mitramis'ra and Anantadeva ascribe them to Brahmapurāṇa. It appears therefore that there must have been another recension of the Br. Pu. which awaits investigation. ८. Not found in Rājadharmakaustubha, see P. 327.

सर्वलक्षणसंयुक्तस्त्वभिषेच्यो [1]नृपस्तदा ॥ २ ॥
नगरं तत्र कर्तव्यं पताकाध्वजसङ्कुलम् ।
नीरजस्कास्तथा कार्या राजमार्गा शुभैर्जलै ॥ ३ ॥[2]
पौरै स्नातै सुवस्त्रैश्च भाव्यं मङ्गलपाणिभि ।
गन्तव्यं वारमुख्याभिस्तथा राजनिवेशनम्[3] ॥ ४ ॥
पौरमुख्यैस्तथा [4]वार्द्धैर्गुणमुख्यैस्तथैव च ।
शोभनीयं च नगरं सविलासैश्च नर्तकै ॥ ५ ॥
स्नानकाले च कर्तव्यो महाकोलाहलस्तथा ।
वादित्रशङ्खपुण्याहै सूतमागधवन्दिभि ॥ ६ ॥
सामन्तैर्मन्त्रिभिर्भाव्यं छत्रचामरपाणिभि ।
आदौ कृत्वा महाशान्तिं पुण्या वैनायिकीं शुभाम् ॥७॥
ग्रहशान्तिं तथा श्रेष्ठां तृतीयामाहुतिं तथा ।
पुरोधा सोपवासश्च श्रुतिस्मृतिसमन्वित ॥ ८ ॥
त्रयोदश महामन्त्रान् तर्पयेज्जातवेदसि ।
गणं चैकप्रतिरथं [5]सत्यधर्मगणौ तथा ॥ ९ ॥
आयुष्यमभयं चैव तथा स्वस्त्ययनं परम् ।
वैष्णवांस्त्राणथ मन्त्रांश्च तथा पौरन्दरानपि ।
सावित्रश्चाप्नरौद्रांश्च वारुणानथ सर्वदा ॥ १० ॥

आताबाहिति[6] त्रयोदश मन्त्रा । गणा =ईदृगन्यामृहेत्यादय[7] । अप्रतिरथः=आशु शिशानेति[8] । सत्यगणा =आगात्सत्यमिति[9] । धर्मगणा =यास्ते अग्ने घोरास्तनुव[10] इति । अभयस्वस्त्ययने=यत इन्द्र[11], स्वस्तिदा[12] इति ।

---

१ नृप० RK नव० mss २ Mitramisra quotes Br Pu from this verse onwards ३ निवेशने for ०निवेशनम् RK ४ ०स्तथा-चार्यैर्गुणि for ०स्तथा वार्द्धैर्गुणा० RK ५ सत्याधर्म० for सत्यधर्म० RP In the commentary too RP reads अधर्म० for धर्म० ६ VS XVIII 38 ७ VS XVII 81 इदृगन्यामहेत्यादय for ईदृगन्यामृहेत्यादय RP, RK reads इदृगब्यामागायेत्यादय ८ RV X 103 ९ TB 3 12 3 2 १० TB. 1 1 7 3 TA 4 22 1 ११ RV VIII 61 13 १२ X 152 2

राजा स्नातः पुनः स्नाप्यः पञ्चगव्येन देववत् ।
मृत्ताम्ररौप्यहेमोत्थै[1] र्जलपूर्णैस्ततो[2] घटैः ॥ ११ ॥
तोयेन शूद्रैः स्नाप्यश्च पश्चिमां दिशमाश्रितैः[3] ।
ततः क्षीरेण वैश्यैश्च दक्षिणस्यां दिशि स्थितैः ॥ १२ ॥
क्षत्रियैश्च ततो दध्ना पूर्वस्यां दिश्यवस्थितैः ।
अमृतेन ततो विप्रैर्घृतेनोत्तरतः स्थितैः ॥ १३ ॥
पर्वतोर्ध्वमृदा[4] पश्चाद्राज्ञः शोध्यं शिरो द्विजैः ।
वल्मीकमृदया कर्णौ शोधितव्यौ प्रयत्नतः ॥ १४ ॥
शक्रस्थानाच्च मृदया ग्रीवा शोध्या च भूभृतः ।
[5]राजवेश्यगृहद्वारमृदया हृदयं तथा ॥ १५ ॥
देवालयमृदा पृष्ठं शोध्यं तस्याथ राजभिः ।
गजदन्तोद्धृतमृदा दक्षिणस्तु तथा भुजः ॥ १६ ॥
शोधनीया शनैर्नासा वृषभश्रृङ्गलग्नया[6] ।
कटिदेशस्ततो [7]वैश्यैर्वेश्याद्वारमृदा तथा ॥ १७ ॥
नदीकूलमृदा पार्श्वे शोधितव्ये यथाक्रमम् ।
अश्वशालामृदा शूद्रैः शोध्ये तस्याथ[8] जानुनी ॥ १८ ॥
गोकुलान्मृदया जङ्घे पादौ च सरसो मृदा ।
सर्वौषधैः सर्ववीजैर्गन्धरत्नैश्च[9] सर्वदा ॥ १९ ॥
सर्वपुष्पैः सर्वफलैः स्नाप्यो रोचनया तथा ।
अथ भद्रासनगतः सर्वतोयैः[10] [11]सुभास्वरैः[11] ॥ २० ॥
यथाशक्त्या समानीतैः पुरस्कृत्य पुरोहितम्[12] ।
नृपतिस्त्वभिषेक्तव्यो दैवज्ञवचनान्नरैः ॥ २१ ॥ [13]

---

१. हेमरौप्योत्थै० for ०रौप्यहेमोत्थै० RP. ०हेमाद्यै for हेमोत्थै० RK. २. ०स्तथा for ०स्ततो RK. ३. ०मास्थितैः for ०माश्रितैः RP. ४. पर्वतोत्थ० for पर्वतोर्ध्व० RP. ५. राजवेश्या० for राजवेश्य० RK. ६. वृषश्रृङ्गवि० for वृषभश्रृङ्गल० RP; ०स्कन्ध for श्रृङ्ग RK. ७. ०स्ततः शोध्यो वै० for ०स्ततो वैश्यैर्वे० RK. ८. शोधितव्ये च for शोध्ये तस्याथ RK. ९. गन्धैरत्नैश्च for गन्धरत्नैश्च RP. १०. ०तोयैस्तु भा० for ०तोयैः सु० RK. ११. शुभाम्बरैः for सुभास्वरैः RP. १२. ०पुरोहितैः for पुरोहितम् RP. १३. Wanting in RK.

ब्राह्मणै च क्षत्रियैर्वैश्यै शूद्रमुख्यैस्तथैव च।
पतिव्रताभिर्नारीभि पुत्रिणीभिश्च पुत्रवत् ॥ २२ ॥
तत स्नातो विलिप्ताङ्ग[1] कृतदेवाभितर्पण ।
आबद्धमुकुट स्रग्वी बद्धपट्टो[2] विभूषित ।
मङ्गलाना शत पश्येत्पुण्यमष्टोत्तर शतम् ॥ २३ ॥
शान्त्यै प्राधानिके[3] स्थाने सर्वमेतद् यथाक्रमम्।
कृत्वा शेष ततो हुत्वा दद्यात्पूर्णाहुतिं तत ॥ २४॥
अभिषिक्तस्ततो राजा सम्पूज्यादौ[4] विनायकम्।
तत क्रमेण देवाश्च ब्रह्मविष्णुमहेश्वरान् ॥ २५ ॥
महानील च नागेन्द्रमग्नि[5] विप्रान् पुरोहितम् ।
देवान् पितॄन् समुद्दिश्य दद्याद्विप्रेषु दक्षिणाम् ॥ २६ ॥
अभय सर्वभूतेभ्य[6] सम्यक् तत्र ददाति च ।
आघातस्थानगान्[7] सर्वान्पशूनपि विमोचयेत् ॥ २७ ॥
बन्धनस्थानसस्थाश्च प्रमोचयति शास्त्रवत्[8] ।
गोब्राह्मणाविहन्तॄश्च कण्टकान्[9] दारुणानपि ॥ २८ ॥
जहाति हस्तिहन्तॄश्च क्रूराश्चापि सुशिक्षितान्[10] ।
व्याघ्रचर्मोत्तरे रम्ये तथा सिंहासने शुभे ॥ २९ ॥
उपवेश्यो भवेद्राजा स्वयमेव पुरोधसा ।
सिंहासनस्थ सम्पश्येत्प्रकृतीश्च समागता[11] ॥ ३० ॥
छत्रायुधानि सम्पूज्य गणमुख्यास्तुरङ्गमान् ।
आरुह्यालङ्कृत नाग विसृजन् धनसञ्चयम् ॥ ३१ ॥
प्रदक्षिणीकृत्य पुर प्रविश्य च पुनर्गृहम्[12] ।
समस्तान् पौरमुख्याश्च कृत्वा पूजा विसर्जयेत् ॥ ३२ ॥

---

१ सुस्नातोऽनुलिप्ताङ्ग for तत स्नातो विलिप्ताङ्ग RK २ बद्धपादो for बद्धपट्टो RK ३ शान्तिप्रधानके for शान्त्यै प्राधानिके RK ४ साम्राज्यादौ for सम्पूज्यादौ RP ५ महानलश्च राजेन्द्र for महानील च नागेन्द्र० RK ६ सर्वभूतेषु for सर्वभूतेभ्य RP ७ ०स्थानकात् for स्थानगान् RK ८ शास्त्रवत् for शस्त्रवित् mss ९ पापिष्ठान् for कण्टकान् RK १० सुरक्षितान् for सुशिक्षितान् RK ११ समासत for समागता RP १२ प्रविशेच्च शुभ गृहम् for प्रविश्य च पुनर्गृहम् RK, पुर गृहम् for पुनर्गृहम् RP

गतेषु तेषु च धनैस्तर्पयेन्नटनर्तकान् ।
ब्राह्मणान् भोजयेत्सर्वान् दीनानाथांश्च बान्धवान् ॥२३॥
ततो महाजनैः सर्द्धं पूर्वराजक्रमादिभिः ।
आहारं कुरुते राजा राजभृत्यान् विभज्य[1] च ।
आचम्य ताम्बूलमुखो विहरेत्[2] ततः क्षणम् ॥ ३४ ॥
ततः कतिपयैः सार्द्धमन्तःपुरनिवासिभिः ।
रक्षेत्प्रयत्नादात्मानं भूयो भुङ्क्ते[4] यथासुखम् ॥ ३५ ॥
अनेनैव विधानेन कुर्याद्वर्षापनं सदा ।
अभिषेकाहि यत्नेन प्रतिसंवत्सरं नृपः ॥ ३६ ॥

श्रीरामायणे[5]—

शनैस्तस्मिन् प्रशान्ते तु[6] जनघोषे नराधिपः[7] ।
प्रणम्य गुरुमासीनमित्युवाच पुरोहितम्[8] ।
अभिषेकाय रामस्य यत्कर्म सपरिच्छदम् ॥ ३७ ॥
तदस्य[9] भगवन्सर्वमाज्ञापयितुमर्हसि ।
तच्छ्रुत्वा भूमिपालस्य वसिष्ठो [10]द्विजसत्तमः ॥ ३८ ॥
आदिदेशाग्रतो राज्ञः स्थितान् युक्तान् कृताञ्जलीन् ।

युक्तान्=नियोगिपुरुषान् ॥

सुवर्णादीनि रत्नानि मणीन्[11] सर्वौषधीरपि ॥ ३९ ॥
शुक्लं च माल्यं[12] लाजांश्च पृथक् च मधुसर्पिषी ।
अहतानि च वासांसि रथं सर्वायुधानि च ।[13] ॥ ४०॥
सितवर्णं च तुरग[14] गजं च शुभलक्षणम् ।
चामरव्यजने चोभे ध्वजं छत्रं च पाण्डुरम् ॥ ४१ ॥

---

१. विसृज्य for विभज्य RP. २. विहरेच्च for विहरेत RK. ३. ०सपत्ना० for ०प्रयत्ना० RP. ४. भुक्त्वैव for भूयो भुङ्क्ते RK. ५. Rāmāyaṇa, Ayodhyākāṇḍa, canto III, verses 5 c-d-14. ६. च for तु इति मु० रा० ७. जना० for नरा० इति मु० रा० ८. वसिष्ठं मुनिशार्दूलं राजा वचनमब्रवीत् for प्रणम्य गुरुमासीनमित्युवाच पुरोहितम् इति मु० रा०. ९. तदद्य for तदस्य इति मु० रा०. १०. मुनि० for द्विज० इति मु० रा० ११. यज्ञीन् for मणीन् इति मु० रा० १२. शुक्लमाल्यानि for शुक्लं च माल्यम् इति मु० रा० १३. ०युधान्यपि for ०युधानि च इति मु० रा० १४. चतुरङ्गबलं चैव for सितवर्णं च तुरगम् इति मु० रा०.

शतं च शातकौम्भानां[1] कुम्भानामग्निवर्चसाम् ।
हिरण्यशृङ्गं वृषभं समग्रं व्याघ्रचर्म च ॥ ४२ ॥
यच्चान्यत्किञ्चिदेष्टव्यं यच्च किञ्चिन्मनोऽनुगम्[3] ।
उपास्थापयत भ्रातरग्न्यगारे महीपतेः ॥ ४३ ॥
अन्त पुरस्य द्वाराणि सर्वस्य नगरस्य च ।
[4]चन्दनैः स्रग्भिरर्च्यन्तां सुमनोदामभिस्तथा[5] ॥ ४४ ॥
प्रशस्तवस्तु[6] गुणवद्दधिक्षीरोपसेवनम्[7] ।
द्विजानां शतसाहस्रं सत्प्रकारफलं लभेत्[8] ॥ ४५ ॥
सिद्धमन्त्राद्यसम्भारः[9] प्रत्यूपन्येव कल्प्यताम्[10] ।
सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम् ।
ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च ॥४६॥
आज्ञाप्यन्तां[12] पताकाश्च राजमार्गश्च सिच्यताम् ।
सर्वे च नागराश्चैव[13] गणिकाश्च स्वलङ्कृताः ॥ ४७ ॥
कक्ष्यां द्वितीयामासाद्य तिष्ठन्तु नृपवेश्मनि[14] ।

कक्ष्याम्=प्रकोष्ठम् ॥

देवायतनचैत्येषु नानाभक्ष्याः[15] सदक्षिणाः ॥ ४८ ॥
उपस्थापयितव्याश्च[16] माल्ययोगाः पृथक् पृथक् ।
बद्धदीर्घासयो योधा[17] सन्नद्धा मृष्टवाससः ॥ ४९ ॥
महाराजस्य भवनं[18] प्रविशन्तु महोदयम् ।

---

१. ०कुम्भानाम् for ०कौम्भानाम् इति मु० रा० २. ०शृङ्गमृषभम् for शृङ्गं वृषभम् इति मु० रा० ३. तत्सर्वमुपकल्प्यताम् for यच्च किञ्चिन्मनोऽनुगम् इति मु० रा० ४. चन्दनस्रग्भि० for चन्दनै स्रग्भि० इति मु० रा० ५ धूपैश्च घ्राणहारिभिः for सुमनोदामभिस्तथा इति मु० रा० ६. ०मन्नं for ०वस्तु इति मु० रा० ७. ०सेचनम् for ०सेवनम् इति मु० रा० ८ ०कामफलं भवेत् for ०कारफलं लभेत् इति मु० रा०. ९. सिद्धमत्राद्यसम्भारम् for सिद्धमन्त्राद्यसम्भार RP. १० This line is missing in the extant Ramāyana ११ Ibid 16-20. १२ आवध्यन्ताम् for आज्ञाप्यन्ताम् इति मु० रा० १३ तालापचरा for नागराश्चैव इति मु० रा० १४. ०वेश्मनः for ०वेश्मनि इति मु० रा० १५. माल्य० for नाना० इति मु० रा० १६. ०व्याः स्युर् for ०व्याश्च इति मु० रा० १७. दीर्घासिनद्धगोधाश्च for बद्धदीर्घासयो योधा इति मु० रा० १८. ०राजाङ्गनं शूरा for ०राजस्य भवनम् इति मु० रा०.

'एवमाज्ञाप्य तत्सर्वं कृतमित्यभ्यवेदयत् ।
सुप्रीतमनसे राज्ञे वसिष्ठो हर्षयन्पुनः ॥ ५० ॥

तथा'—

आभिषेचनिकं द्रव्यं सर्वमेवोपकल्पितम् ।
गङ्गायमुनयोश्चैव सङ्गमादाहृतं जलम् ॥ ५१ ॥
याश्चान्याः सरितः पुण्यास्ताभ्यश्च जलमाहृतम् ।
सर्वबीजानि गन्धाश्च रत्नानि विविधानि च ॥ ५२ ॥
वाहनं नरसंयुक्तं दर्भाः सुमनसः पयः ।
अहतानि च वासांसि भृङ्गारं च हिरण्मयम् ॥ ५३ ॥
क्षीरवृक्षप्रवालैश्च पश्चात्फलविमिश्रितैः ।
पूर्णाकुम्भाः स्वलङ्कृत्य काञ्चना उपकल्पिताः ॥ ५४ ॥
रसो गोरोचना चैव लाजा दधि घृतं मधु ।
तथैव पुण्यतीर्थेभ्यो मृदापो जङ्गमानि च ॥ ५५ ॥
चन्द्रांशुविमले चारुमणिदण्डे स्वलङ्कृते ।

---

१. The published edition of the Rāmāyaṇa has a different version : एवं व्यादिश्य विप्रौ तु क्रियास्तत्र विनिष्ठितौ ॥ चक्रतुश्चैव यच्छेषं पार्थिवाय निवेद्य च । कृतमित्येव चाब्रूतामभिगम्य जगत्पतिम् ॥ यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजोत्तमौ ॥ २. Cf. Ayodhyākāṇḍa, sarga 15, Verses 4-13. The Rāmāyaṇa has the following different version:—अभिषेकाय रामस्य द्विजेन्द्रैरुपकल्पितम् । काञ्चना जलकुम्भाश्च भद्रपीठं स्वलङ्कृतम् ॥ रथश्च सम्यगास्तीर्णो भास्वता व्याघ्रचर्मणा । गङ्गायमुनयोः पुण्यात्सङ्गमादाहृतं जलम् ॥ याश्चान्याः सरितः पुण्या ह्रदाः कूपाः सरांसि च । प्राग्वाहाश्चोर्ध्ववाहाश्च तिर्यग्वाहाश्च क्षीरिणः ॥ ताभ्यश्चैवाहृतं तोयं समुद्रेभ्यश्च सर्वशः । क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥ अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः । सजलाः क्षीरिभिश्छन्नाः घटाः काञ्चनराजताः ॥ पद्मोत्पलयुता भान्ति पूर्णाः परमवारिणा । चन्द्रांशुविकचप्रख्यं पाण्डुरं रत्नभूषितम् ॥ सज्जं तिष्ठति रामस्य वालव्यजनमुत्तमम् । चन्द्रमण्डलसंकाशमातपत्रं च पाण्डुरम् ॥ सज्जं द्युतिकरं श्रीमदभिषेकपुरस्सरम् । पाण्डुरश्च वृषः सज्जः पाण्डुराश्वश्च संस्थितः ॥ प्रस्रुतश्च गजः श्रीमानौपवाह्यः प्रतीक्षते । अष्टौ च कन्या माङ्गल्याः सर्वाभरणभूषिताः ॥ वादित्राणि च सर्वाणि बन्दिनश्च तथाऽपरे । इक्ष्वाकूणां यथा राज्ये सम्भ्रियेताभिषेचनम् ॥

चामरव्यजने श्रीमद्रामार्थमुपकल्पिते ॥ ५६ ॥
पूर्णेन्दुमण्डलाभं च श्रीमन्मालाविभूषितम् ।
रामस्य यौवराज्यार्थमातपत्रं प्रकल्पितम् ॥ ५७ ॥
मत्तो गजवरश्चैव औपवाह्यः प्रतीक्षते ।
औपवाह्य =राजवाह्य[१] ॥
श्वेतश्च तुरगश्रेष्ठो रामार्थमुपकल्पितः ॥ ५८ ॥
अष्टौ कन्याश्च माङ्गल्याः सर्वाभरणभूषिताः ।
रूपयौवनसम्पन्ना गणिकाश्च स्वलङ्कृताः ॥ ५९ ॥
श्वेतपुष्पाणि धेनुश्च निस्त्रिंशो धनुरेव च ।
हेमदाम्ना स्वलङ्कृत्य ककुद्मी पाण्डुरो वृषः ॥ ६० ॥
सिंहासनं व्याघ्रचर्म समिद्धश्च हुताशनः ।
वादित्राणि च सर्वाणि सूतमागधवन्दिनः ॥ ६१ ॥
आचार्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः ।
पौरजानपदाः श्रेणी नैगमाना गणैः सह ।
एते चान्ये च बहवः प्रीयमाणाः प्रियंवदाः ॥ ६२ ॥

तथा रामं प्रति दशरथवाक्यम्—
आदिष्टो ह्यसि मे ज्येष्ठप्रसूत सदृशो गुणैः ।[२]
ज्येष्ठायामपि[३] मे पत्न्या सदृश्या सदृशः सुतः ॥ ६३ ॥[४]
उत्पन्नः स्वैर्गुणैर्ज्येष्ठो रामो नामात्मजः प्रियः ।[५]
त्वया तात[६] ! प्रजा ह्यता[७] स्वगुणैरनुरञ्जिता ॥ ६४ ॥[८]
तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्स्यसि[९] ।
गते पुरोहिते रामस्ततो नियतमानसः ।
सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥ ६५ ॥[१०]

---

१ The word राजवाह्य is supplied by the Editor २ This line is wanting in the published editions of the Ramayana ३ ०मसि for मपि० इति मु० रा० ४ Rama Ayodhya 3 39 ५ For this line मु० रा० reads उत्पन्नस्त्वं गुणज्येष्ठो मम नामात्मजः प्रियः ६ यत for तात इति मु० रा० ७ क्षेमा for ह्यता इति मु० रा० ८ Ayodhya 3 40 ९ ०मवाप्नुहि for ०मवाप्स्यसि इति मु० रा० This line=Ayodhya 41 a b १० Ayodhya 6 I

प्रगृह्य शिरसा [1]पत्रहविर्ण्यं विधिवत्ततः ।
महते दैवतायाज्यं जुहाव ज्वलितेऽनले[2] ॥ ६६ ॥[3]
शेषं च हविषस्तस्य प्राश्याशास्यात्मनिश्चयम्[4] ।
ध्यायन्नारायणं देवं स्थण्डिले[5] कुशसंस्तरे ॥ ६७ ॥
वाग्यतः सह वैदेह्या भूत्वा च नियतात्मवान्[6] ।
श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥ ६८ ॥
कृतोपवासं रामं तु वैदेह्या सहितं तदा ।
सद्भार्यां चितौ सुप्तं शुश्राव विधिवज्जनः ॥[7] ६६ ॥

इत्यभिषेकविधिः ॥

## अथ राजगुणाः ( ३ )

तत्र शंखलिखितौ[8]—

"राजा दीर्घदर्शी महोत्साहः शक्तिमाननसूयुर्भक्तवत्सलः[9] त्यागी शरण्यः सर्वभूतानां संविभक्ता सत्यवाक् अमत्सरी गम्भीरोऽमर्षणो युवस्तेजस्वी प्रतिविधानकुशलोऽदीर्घसूत्रो दक्षः क्षमावाँल्लदयज्ञो देशकालद्रव्यप्रयोगसंग्रहनिमित्तज्ञानकुशलो गूढमन्त्रप्रचारः[10] संवृतरन्ध्रः पररन्ध्रज्ञो दृढप्रहारी लघुहस्तो जितस्थानासनहिमातपो जितकामरागद्वेषलोभमत्सरः प्रजाभिरामो दीनानुग्रहकर्ता ब्राह्मणेष्वन्नप्रदाता श्रीयशोऽर्थी ॥"

दीर्घदर्शी=अनागतकार्यतत्त्वज्ञः । गम्भीरः=अनुपलक्षितक्रोधहर्षाद्याकारः । अमर्षणः=परसमृद्धेरसोढा । अदीर्घसूत्रः=अचिरक्रियः । गूढमन्त्रप्रचारः=फलानुमितमन्त्रतत्त्वः । संवृतरन्ध्रः=रन्ध्रे यत्र परे प्रभवन्ति तदावृतं यस्य । प्रजाभिरामः=प्रजानामभिरामयिता ॥

---

१. पात्रीं for पत्र इति मु० रा०. २. ज्वलितानले for ज्वलितेऽनले इति मु० रा०. ३ Ayodhyā 6. 2—4. ४. ०शास्यात्मनः प्रियम् for ०शास्यात्मनिश्चयम् इति मु० रा०. ५. स्वास्तीर्णे for स्थण्डिले इति मु० रा०. ६. नियतमानसः for च नियतात्मवान् इति मु० रा०. ७. Ayodhyā 6.9. The published edition of the Rāmāyaṇa reads : कृतोपवासं तु तदा वैदेह्या सह राघवम् । अयोध्यानिलयः श्रुत्वा सर्वः प्रमुदितो जनः. ८. Dharmasūtras of Saṅkhalikhita, Edited by P. V. Kane, Poona. 1926. P. 38. ९. ०वत्सः for ०वत्सलः इति मु० शं. १० ०प्रचारसंवृत० for प्रचारः संवृत० इति मु० शं०.

गौतम —

" राजा सर्वस्येष्टे ब्राह्मणवर्जम् ।[1] साधुकारी [2]स्यात्साधुवादी ।[3] त्रय्यामान्वीक्षिक्यादिकाया वाचि विनीत [4]। शुचिर्जितेन्द्रियो गुणवत्सहायोपायसम्पन्न [5]। सम प्रजासु स्यात्[6] । हित [7]चासा प्रकुर्वीत[8] ॥

ईष्टे = अधिपतिर्भवति । आन्वीक्षिकी = न्यायविद्या ।

याज्ञवल्क्य [9]—

महोत्साह स्थूललक्ष कृतज्ञो वृद्धसेवक ।
विनीत सत्वसम्पन्न कुलीन सत्यवाक् शुचि ॥ १ ॥
अदीर्घसूत्र स्मृतिमानक्षुद्रोऽपरुषस्तथा ।
धार्मिकोऽव्यसनश्चैव प्राज्ञ शूरो रहस्यवित् ॥ २ ॥
स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्या दण्डनीत्या तथैव ।
विनीतस्त्वथ वार्तायां त्रय्या चैव नराधिप ॥ ३ ॥

महोत्साह = महोद्यम । स्थूललक्ष = बहुव्यय ।

कात्यायन —

विनीत शास्त्रसम्पन्न यशशौर्यसमन्वित ।
ब्रह्मण्यो दानशील स्याद्धर्मसत्यपरो नृप ॥ ४ ॥
स्तम्भोपतापपैशुन्यचापलक्रोधवर्जित ।
प्रगल्भ सत्रतोद्यम सम्भाषी प्रियदर्शन ॥ ५ ॥
वश्येन्द्रिय जितात्मान धृतदण्ड विकारिषु ।
परीक्ष्यकारिणा धीरमत्यन्त श्रीर्निषेवत ॥ ६ ॥

स्तम्भ = परा प्रणति । उपतापोऽत्र प्रजापीडनम् । पैशुन्यम् = परदोषाविष्करणम् ।
प्रगल्भ = अपरिपक्षीह ।

विष्णु —

प्रजासुखे सुखी राजा तद दुखैश्च दु खित ।

---

१ Gautamadharma 2 2 11 1 २ 'स्यात् is missing in the published edition of Gautamadharmasūtra ३ 2. 2 11 2 ४ 2 2 11 3 ०न्वीक्षिक्या वाऽभिविनीत for ०न्वीक्षिक्यादिकाया वाचि विनीत । ५ 2 2 11 4 ६ 2 2 11 5 ७ च is missing in the published edition of the Gautamadharma ८ 2 2 11 6 ९ 1 309—311

स कीर्तियुक्तो लोकेऽस्मिन् प्रेत्य स्वर्गे महीयते ॥ ७ ॥

याज्ञवल्क्यः[1] —

ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मो [2]क्रोधितोऽरिषु ।
स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥ ८ ॥

मनुः[3] —

स्वराष्ट्रे न्यायवृत्तिः[4] स्याद् भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥ ९ ॥
एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः ।
विस्तीर्यते यशो लोके तैलबिन्दुरिवाम्भसि ॥ १० ॥

कात्यायनः —

आत्मीये संस्थिता धर्मे नृपाः शक्रत्वमाप्नुयुः ।
अवीचिवासिनो ये तु व्यपेताचारिणः सदा ॥ ११ ॥
गच्छेत्सम्यगविज्ञाय वशं क्रोधस्य यो नृपः ।
वसेत्स नरके घोरे कल्पार्धं तु न संशयः ॥ १२ ॥
सुराध्यक्षश्च्युतः स्वर्गान्नृपरूपेण तिष्ठति ।
कर्तव्यं तेन तन्नित्यं येन तत्त्वं समाप्नुयात् ॥ १३ ॥

व्यपेताचारिणः=अपभ्रष्टाचाराः । तत्त्वं सुरेशत्वम् । इति राजगुणाः ॥

## अथामात्याः ( ४ )

तत्र नराधिप इत्यनुवृत्तौ याज्ञवल्क्यः[5]—

[6]सन्मन्त्रिणः प्रकुर्वीत प्राज्ञान् मौलान् स्थिरान् शुचीन् ।
तैः सार्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम् ॥ १ ॥

मौलान्=पितृपैतामहान् । शुचीन्=उपधाशुद्धान् ॥

मनुः[7]—

मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्गतान् ।
सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ॥ २ ॥

लब्धलक्षान्=परिदृष्टकर्मणः ॥

---

१. I. 334. २. क्रोधनो० for क्रोधितो० इति मु० या०. ३. 7. 32, 33. ४. वृत्तः for ०वृत्तिः इति मु० म. ५. 1. 312. ६. स मन्त्रिणः for सन्मन्त्रिणः इति मु० या०. ७. 7. 54, 56, 57—59.

अपि यत्सुकर कर्म तदप्येकेन दुष्करम् ।
विशेषतोऽसहायेन किमु राज्य महोदयम् ॥ ३ ॥
तेषा स्व स्वमभिप्रायमुपलभ्य पृथक् पृथक् ।
समस्ताना च कार्येषु विदध्याद्धितमात्मने ॥ ४ ॥
सर्वेषा तु विशेषेण ब्राह्मणेन विपश्चिता ।
मन्त्रयेत्परमं मन्त्र राजा षाड्गुण्यसयुतम् ॥ ५ ॥
नित्य तस्मिन् समाश्वस्त सर्वकार्याणि निक्षिपेत् ।
तेन सार्द्धं विनिश्चित्य तत कार्य[१] समाचरेत् ॥ ६ ॥

मत्स्यपुराणे[२]—

तस्मात्सहायान् वरयेत्कुलीनान् नृपति स्वयम् ।
शूरान् कुलीनजातीयान् बलयुक्तान् श्रियाऽन्वितान् ॥ ७ ॥
रूपसत्त्वगुणोपेतान् सज्जनान् क्षमयाऽन्वितान् ।
क्लेशक्षमान्महोत्साहान् धर्मज्ञांश्च प्रियवदान् ॥ ८ ॥
[३]हितोपदेशकान् राज्ञ[३] स्वामिभक्तान् सुवत्सलान्[४] ।
एवविधान् सहायास्तु[५] शुभकर्मसु योजयेत् ॥ ९ ॥

राजगुणानुवृत्तौ कात्यायन —

एतैरेव गुणैर्युक्तममात्य कार्यचिन्तकम् ।
ब्राह्मणा तु प्रकुर्वीत नृपभक्त कुलोद्गतम् ॥ १० ॥
मन्त्रिणो यत्र सभ्याश्च वैद्याश्च प्रियवादिन ।
राज्याद्धर्मात्सुखात्तत्र क्षिप्र हीयेत पार्थिव ॥ ११ ॥
न तस्य वचने कोपमेतेषा तु प्रवर्तयेत् ।
यस्मादेतै सदा वाच्य न्याय्य सुपरिनिष्ठितम् ॥ १२ ॥

मन्त्रिणो राजकृत्येषु, सभ्या प्रायश्चित्तादौ, वैद्याश्चिकित्सायाम् ॥

महाभारते[६]—

भृत्या ये तत्र योग्या स्यु [७]सम्यक् स्थाप्या परीक्षिता[८] ।

---

१ कर्म for कार्यम् इति मु० म० २ 215 4—6 ३ हितोपदेश-कालज्ञान् for हितोपदेशकान् राज्ञ इति मु० मत्स्य० ४ यशोऽर्थिन for सुवत्सलान् इति मु० मत्स्य० ५ ०सहायाश्च for ०सहायास्तु इति मु० मत्स्य० ६ Maha Santi p 118 3 c d, 4 a b, 119 8, 9, untraced ७ तत्र for सम्यक् इति मु० महा० ८ सुरक्षिता for परीक्षिता इति मु० महा०

नापरीक्ष्य महीपालः प्रकर्तुं[1] भृत्यमर्हति[1] ॥ १३ ॥

तथा[2] —

न बालिशा न च क्षुद्रा नाप्राज्ञा नाजितेन्द्रियाः ।
नाकुलीना नराः [3]पार्श्वे स्थाप्या राज्ञा[4] हितैषिणा[4] ॥१४॥
साधवः कुलजाः शूरा ज्ञानवन्तोऽनसूयकाः ।
अक्षुद्राः शुचयो दक्षाः स्युर्नराः पारिपार्श्वकाः ॥ १५ ॥
परीक्षेत्प्रत्यहं भृत्यानाप्तैश्चारैर्नराधिपः ।
समानशीलैर्विस्रब्धैर्विवृणोति मनोगतम् ॥ १६ ॥

मत्स्यपुराणे[5] —

कुलीनः शीलसम्पन्नो धनुर्वेदविशारदः ।
हस्तशिक्षाश्वशिक्षासु कुशलः श्लक्ष्णभाषिता ॥ १७ ॥
निमित्ते शकुनज्ञाने वेत्ता चैव चिकित्सिते ।
कृतज्ञः कर्मणां शूरस्तथा क्लेशसहस्त्वृजुः ॥ १८ ॥
व्यूहतन्त्रविधानज्ञः[6] फल्गुसारविशेषवित् ।
राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्रियोऽथवा ॥ १९ ॥

व्यूहतन्त्रविधानज्ञः=चक्रदण्डाकारसैन्यसन्निवेशो व्यूहः, तस्य तन्त्रं शास्त्रं तेन व्यूहप्रकारं यो जानाति ।

प्रांशुः सुरूपो दक्षश्च प्रियवादी न चोद्धतः ।
चित्तग्राही[7] च सर्वेषां प्रतीहारो विधीयते ॥ २० ॥
यथोक्तवादी दूतः स्याद्देशभाषाविशारदः ।
[8]सूक्तक्लेशसहो वाग्मी देशकालविभागवित् ॥ २१ ॥
विज्ञाय[9] देशं कालं च कृतं यस्स्यान्महीक्षितः[9] ।
वक्तापि तस्य[10] यः काले स दूतो नृपतेर्भवेत् ॥ २२ ॥

---

१. सचिवं कर्तुम्० for प्रकर्तुं भृत्यम् इति मु० महा० २. RP. assigns the following three s'lokas to Visnudharmottara. ३. सर्वे for पार्श्वे इति मु० महा० ४. गुणगणैषिणा for राज्ञा हितैषिणा इति मु० महा०. ५. 215. 8-47 a-b ६. ०तत्त्व० for ०तन्त्र० इति मु० मत्स्य० ७. ०ग्राहश्च for ०ग्राही च इति मु० मत्स्य०. ८. शक्तः for सूक्त० इति मु० मत्स्य०. ९. विज्ञातदेशकालश्च दूतः स स्या० for विज्ञाय देशं कालं च कृतं यत्स्या० इति मु० मत्स्य०. १०. वक्ता नयस्य for वक्तापि तस्य इति मु० मत्स्य०.

प्रांशवो व्यायता: शूरा दृढभक्ता निराकुला: ।
राज्ञां तु रक्षिण: कार्या: सदा क्लेशसहा हिता: ॥ २३ ॥
अनाहार्योऽनृशंसश्च दृढभक्तिश्च पार्थिवे ।
ताम्बूलधारी भवति नारी वाप्यथ तद्गुणा ॥ २४ ॥

अनाहार्य:=परैरभेद्य: ।

षाड्गुण्यविधितत्त्वज्ञो देशकालविशारद.[1] ।
सान्धिविग्रहिक कार्यो राज्ञा नयविशारद: ॥ २५ ॥

षड्गुणा: = सन्धिविग्रहयानासनद्वैधीभावसंश्रया:, तेषां विधे प्रकारस्य वेदिता ।

आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारद. ।
कृताकृतज्ञो भृत्यानां ज्ञेय. [2]स्यादक्षरक्षिता ॥२६ ॥[3]

अक्षरक्षिता = अक्षपरिपालक: ।

सुरूपस्तरुण: प्रांशुर्दृढभक्ति: कुलोचित: ।
शूर. क्लेशसहश्चैव खड्गधारी प्रकीर्तित: ॥ २७ ॥
शूरश्च बलयुक्तश्च गजाश्वरथकोविद: ।
धनुर्धारी भवेद्राज्ञ सर्वक्लेशसह: शुचि: ॥ २८ ॥
निमित्तशकुनज्ञानहयशिक्षाविशारद [4] ।
हयायुर्वेदतत्त्वज्ञो भूमिभागविशेषवित्[5] ॥ २९ ।
बलाबलज्ञो रथिन: स्थिरदृष्टि प्रियवद. ।
शूरश्च कृतविद्यश्च सारथि परिकीर्तित ॥ ३० ॥
अनाहार्य: शुचिर्दक्षश्चिकित्सितविदा वर. ।
[6]सूदशास्त्रविशेषज्ञ. सूदाध्यक्ष. प्रशस्यते ॥ ३१ ॥
सूदशास्त्रविधानज्ञा पराभेद्या' कुलोद्गता ।
सर्वे महानसे धार्या नीचकेशनखा[7] नरा ॥ ३२ ॥

---

१. ०भापा० for ०राज० इति मु० मत्स्य० २. स्याद्देश० for स्यादक्ष० इति मु० मत्स्य० ३ The printed edition of Matsyapurana reverses the order of the lines in this verse ४ ०ज्ञानी for ०ज्ञान० इति मु० मत्स्य० ५ भुवो भागविचक्षण for भूमिभागविशेषवित् इति मु० मत्स्य० ६ सूप० for सूद० इति मु० मत्स्य० ७. धार्या. कृत्तकेशनखा: for नीचकेशनखा. इति मु० मत्स्य०.

समः शत्रौ च मित्रे च धर्मशास्त्रविशारदः ।
विप्रमुख्यः कुलीनश्च धर्माधिकरणो भवेत् ।
कार्यास्तथाविधास्तत्र द्विजमुख्याः सभासदः ॥ ३३ ॥
सर्वदेशाक्षराभिज्ञः सर्वशास्त्रविशारदः ।
लेखकः कथितो राज्ञः सर्वाधिकरणो[1] बुधैः[1] ॥ ३४ ॥
शीर्षोपेतान् सुसम्पूर्णान् समश्रेणिगतान् शुभान्[2] ।
अक्षरान्वै लिखेद्यस्तु लेखकः स वरः स्मृतः ॥ ३५ ॥
उपायवाक्यकुशलः सर्वशास्त्रविशारदः ।
बह्वर्थवक्ता चाल्पेन लेखकः स्यान्नृपोत्तम ॥ ३६ ॥
उपायाः सामदानभेददण्डास्तेषु, वाक्ये च निपुणाः ।
वाक्याभिप्रायतत्त्वज्ञो देशकालविभागवित् ।
अनाहार्यो नृपे[3] भक्तो लेखकः स्यान्नृपोत्तम ॥ ३७ ॥
पुरुषान्तरतत्त्वज्ञाः प्रांशवश्चाप्यलोलुपाः ।
धर्माधिकरणैः[4] कार्या जनाह्वानकरा[5] नराः ॥ ३८ ॥
एवंविधास्तथा कार्या राज्ञा दौवारिका जनाः ।
लोहवस्त्राजिनादीनां रत्नानां च विधानवित् ॥ ३९ ॥
विज्ञाता फल्गुसाराणामनाहार्यः शुचिः सदा ।
निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्तितः ॥ ४० ॥
आयद्वारेषु सर्वेषु धनाध्यक्षसमा नराः ।
व्ययद्वारेषु च तथा कर्तव्याः पृथिवीक्षिता ॥ ४१ ॥
परम्परागतो यः स्यादष्टाङ्गे तु[6] चिकित्सिते ।
अनाहार्यः स वैद्यः स्याद्धर्मात्मा च कुलोद्गतः ॥ ४२ ॥
प्राणाचार्यः स विज्ञेयो वचनं तस्य भूभुजा ।
राजन् ! राज्ञा सदा कार्यं यथा कार्यं पृथग्जनैः ॥ ४३ ॥
हस्तिशिक्षाविधानज्ञो वनजातिविशारदः ।
क्लेशक्षमस्तथा राज्ञो गजाध्यक्षः प्रशस्यते ॥ ४४ ॥

---

१. ०धिकरणेषु वै for ०धिकरणो बुधैः इति मु० मत्स्य०. २. समान् for शुभान् इति मु० मत्स्य०. ३. अनाहार्ये भवेत्सक्तो for अनाहार्यो नृपे भक्तो इति मु० मत्स्य०. ४. धर्माधिकारिणः for धर्माधिकरणैः इति मु० मत्स्य०. ५. जनादानकरा for जनाह्वानकरा इति मु० मत्स्य० ६. सु for तु इति मु० मत्स्य०

एतैरेव गुणैर्युक्त स्वासनश्च[1] विशेषत ।
गजारोही नरेन्द्रस्य सर्वकर्मसु शस्यते ॥ ४५ ॥

स्वासनो दृढासन ।

हयशिक्षाविधानज्ञश्चिकित्सितविशारद ।
अश्वाध्यक्षो महीभर्तु स्वासनश्च प्रशस्यते ॥४६॥
अनाहार्यश्च शूरश्च तथा प्राज्ञ कुलोद्गत ।
दुर्गाध्यक्ष स्मृतो राज्ञ उद्युक्त सर्वकर्मसु ॥४७॥
वास्तुविद्याविधानज्ञो लघुहस्तो जितश्रम ।
दीर्घदर्शी च शूरश्च स्थपति परिकीर्तित ॥४८॥
यन्त्रमुक्ते पाणिमुक्ते अमुक्ते[2] मुक्तधारिते ।
अस्त्राचार्यो निरुद्वेग कुशलश्च विशिष्यते ॥४९॥

यन्त्रमुक्ते=शरादौ । पाणिमुक्ते=शक्त्यादौ । अमुक्ते=खड्गादौ । मुक्तधारिते=पट्टिशादौ ।

वृद्ध कुलोद्गत सूक्त पितृपैतामह शुचि ।
राज्ञामन्त पुराध्यक्षो विनीतश्च तथेष्यते ॥५०॥
पञ्चाशाब्दाधिका योषा पुरुषा सप्तते परे[3] ।
अन्त पुरचरा कार्या[4] राज्ञा सर्वेषु कर्मसु ॥ ५१ ॥
स्थापनाजातितत्त्वज्ञ सतत प्रतिजागृत ।
राज्ञ स्यादायुधागारे दक्ष कर्मसु चोद्यत ॥ ५२ ॥

स्थापना=आयुधयन्त्रावरणानामुचितदेशनिवेश । जातय आयुधादीनामवान्तरभेदा ।

कर्माण्यपरिमेयानि राज्ञो नृपकुलोद्वह !
उत्तमाधममध्यानि बुद्ध्वा कर्माणि पार्थिव ॥ ५३ ॥
उत्तमाधममध्येषु पुरुषेषु नियोजयेत् ।
नरकर्मविपर्यासाद्राजा नाशमवाप्नुयात् ॥ ५४ ॥

नरकर्मविपर्यासादिति ॥ उत्तमे कर्मण्यधम मध्यमे कर्मण्युत्तमं नियोजयन्नश्यति ।

---

१. स्थविरश्च for स्वासनश्च इति मु० मत्स्य० २. विमुक्ते for अमुक्ते इति मु० मत्स्य० ३ The published ed of Matsyapu reads एव सप्ताधिकारेषु पुरुषा सप्त ते पुरे for पञ्चाशाब्दाधिका योषा पुरुषा सप्तत परे । ४. परीक्ष्य चाधिकार्या स्यु for अन्त पुरचरा कार्या इति मु० मत्स्य०.

नियोगं पौरुषं भक्तिं श्रुतं शौर्यं कुलं नयम्।
ज्ञात्वा वृत्तिर्विधातव्या पुरुषाणां महीक्षिता ॥ ५५ ॥

शङ्खलिखितौ[1]—

न गृध्नुपरिवारः स्यात्, कामं गृध्नो राजा श्रेयान्[2] सपरिवारः,[3] परिवाराद्धि[4] दोषाः प्रादुर्भवन्ति, तेऽलं विनाशाय, तस्मात्पूर्वमेव तत्परिवारं लिप्सेत[5] श्रुतशीलान्वयोपपन्नम्।

मन्त्रिणोऽभिधाय मनुः[6]—

अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान्।
[7]आप्तानर्थसमाहर्तॄनमात्यान्सुपरीक्षितान् ॥ ५६ ॥
निवर्तेतास्य यावद्भिरितिकर्तव्यता नृभिः।
तावतोऽतन्द्रितान् दक्षान्प्रकुर्वीत विचक्षणान् ॥ ५७ ॥

शङ्खलिखितौ[8]—

सर्वेषां राजकुलरक्षणं कोशपरिपालनं गोब्राह्मणपरित्राणं साम्परायिकं क्रियासाधारण्यत्वादनुजीविनां विशेषेण चारप्रतिचारौ मन्त्रप्रणिधयश्च सर्वास्तत्प्रयोजनत्वात्प्रत्यक्षपरोक्षा[9] वृत्तिस्तस्य राज्ञो भवेत्। एकान्ततो हि दोषः[10], तस्माद् भृत्यपक्षाः क्रोधलोभमानभयदोषोपहताः संलपिताविमानिताभ्याख्याता दानमानस्थानव्यवरोपिता हृतसर्वस्वाः स्वदोषोपहतादयः सततं प्रत्यवेक्षितव्याः। धर्मार्थहितेष्वेतेषां[11] यतेत। स्वविषयाश्रावः परविषयभेदः सामादिभिरुपायैर्मन्त्रज्ञेषु मन्त्रकर्मकरेषु[12] दण्डकर्मवीरा महत्स्वात्मनि च धर्मनित्याः सद्गृहेष्वलुब्धाः प्रत्यन्तेषु मौलाः शुचयोऽर्थकृत्येषु अन्येषु यथानुरूपं नियोज्याः॥"

सर्वेषाममात्यानां सम्परायो युद्धं तदुपयोगि साम्परायिकं क्रियासाधारण्यात् राज्यरक्षणरूपैकक्रियत्वात्। चारो जनपदे चरितज्ञानाय प्रच्छन्नचारी। तच्चरितज्ञः

---

१. P. 38. २. प्रेयाः for श्रेयाः इति मु॰ शं॰ ३. हंसपरि॰ for सपरि॰ इति मु॰ शं॰ ४. The published edition of S'aṅkhalikhita reads न हंसो गृध्नुपरिवारः ५. लिखेत् for लिप्सेत इति मु॰ शं॰ ६. 7. 60. 61. ७. सम्यगर्थ॰ for आप्तानर्थ॰ इति मु॰ म॰ ८. PP. 38-39. ९. The word परोक्षा is missing in the published edition of S'aṅkhalikhita. १०. दोषा for दोषः इति मु॰ शं॰ ११. The published edition of S'aṅkhalikhita reads ॰विषये॰ for ॰हिते॰ १२. The published edition of S'aṅkhalikhita reads मन्त्रकर्म दण्डकर्म कर्मकरेषु वीराः for मन्त्रकर्मकरेषु दण्डकर्मवीराः।

प्रच्छन्नः प्रनिचारः। मन्त्रप्रणिधयः=गूढो मन्त्रान्वेषारः। एते परराजसम्बन्धिनः सर्पाः शङ्कनीया इत्यर्थः। तत्प्रयोजनत्वात्। यतस्तदेव चरितज्ञानं चारादीनां प्रयोजनम्। प्रत्यक्षा वृत्तिः स्वयं कार्यदर्शनम्। परोक्षाचारे परचरितज्ञानम्। एकान्ततोऽन्यतरवृत्तिमात्राश्रयेण। भृत्यपक्षा भृत्याः पूर्वं सम्मानिताः पश्चाद्विमानिताः। अभ्याख्यातम् आभिमुख्येन गुणाख्यानम्। दानमानस्थानव्यवरोपिता दानेन व्यवरोपिता मानेन व्यवरोपिताः स्थानेन व्यवरोपिताः। स्वदोषोपहता आत्मदोषदूषिताः। एवमादयः सततं प्रत्यवेक्षितव्याः। तेन कारणेन। एनेषां सम्बन्धिषु धर्मादिषु यतेत। स्वविषयाश्रावः स्वविषयमन्त्रस्याश्रावणम् अप्रकाशनं कार्यम्। महत्सु कार्येषु स्वात्मनि रक्षितव्या धर्मनित्या धार्मिकाः सङ्ग्रहेष्वर्थस्येति शेषः। प्रत्यन्तेषु स्वमण्डलप्रत्यन्तदेशेषु मौलास्तद्देशजाता ॥

विष्णुः[1]—आकरलवणशुल्कतरनागवनेष्वाप्तान्नियुञ्जीत। धर्मिष्ठान् धर्मकार्येषु निपुणान् अर्थकार्येषु शूरान् सङ्ग्रामकर्मसु प्राज्ञान् उभेषु पण्डान् स्त्रीषु ॥"

मनुः[2]—

तेषामर्थे नियुञ्जीत शूरान् दक्षान् कुलोद्गतान्।
शुचीनाकरकर्मान्ते भीरूनन्तर्निवेशने ॥ ५८ ॥
सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम्।
स्यादाम्नायपरो[3] लोके वर्तेत पितृवन्नृपु ॥ ५६ ॥
अध्यक्षान्विविधान्कुर्यात्तत्र तत्र विपश्चितः।
तेऽस्य सर्वाण्यवेक्षेरन्नृणां कार्याणि कुर्वताम् ॥ ६० ॥

सांवत्सरिकं बलिम् = संवत्सरग्राह्यं करम्। तथा—

दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम्।
इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥ ६१ ॥
अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित्।
वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥ ६२ ॥
अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया।
नृपतौ कोशराष्ट्रे तु दूते सन्धिविपर्ययौ ॥ ६३ ॥
दूत एव हि सन्धत्ते भिनत्त्येव च संहतान्।
दूतस्तत्कुरुते कर्म भिद्यन्ते येन मानवाः ॥ ६४ ॥

---

१. *Cf. Aparārka on Yajnavalkyasmrti 1. 12. 15.* २. 7. 62, 80, 81, 63—68. ३. ०म्नाय० for ०दाम्नाय० इति मु० म .

स विद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः ।
आकारमिङ्गितं चेष्टां कृत्येषु च चिकीर्षितम् ॥ ६५ ॥
बुद्ध्वा च सर्वं तत्त्वेन परराजचिकीर्षितम् ।
तथा प्रयत्नमातिष्ठेद्यथाऽऽत्मानं न पीडयेत् ॥ ६६ ॥

महाभारते[1]—

नतु हन्यान्महीपालो[2] दूतं कस्याञ्चिदापदि ।
दूतहन्ता[3] तु [4]नरकमाविशेत्सचिवैः सह ॥ ६७ ॥

श्रीरामायणे[5]—

दूता न वध्याः[6] प्रवदन्ति सन्तो
दूतस्य दण्डा बहवः प्रदिष्टाः[7] ॥ ६८ ॥
वैरूप्यमङ्गेषु कशाभिघातो
मौण्ड्यं तथा लक्षणसन्निपातः ।
एतान् हि दूते प्रवदन्ति दण्डान्
दूतस्य दण्डो हि वधो न दृष्टः[8] ॥ ६९ ॥

अथानुजीविवृत्तम् । तत्र मत्स्यपुराणे[9]—

मत्स्य उवाच—

यथानुवर्तितव्यं स्यान्मनो राजानुजीविभिः ।
तथा ते कथयिष्यामि निबोध गदतो मम ॥ ७० ॥
ज्ञात्वा सर्वात्मना कार्यं स्वशक्त्या रविनन्दन !
आक्षेपवचनं[10] तस्य न वक्तव्यं कदाचन[11] ॥ ७१ ॥
अनुकूलं प्रियं त्वस्य[12] वक्तव्यं जनसंसदि ।
रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् ॥ ७२ ॥

---

१. Mahā. S'āntip. 85. 26. २. ०न्नृपो जातु for ०न्महीपालो इति मु० महा० ३. दूतस्य हन्ता for दूतहन्ता तु इति मु० महा० ४. निरय० for नरक० इति मु० महा० ५. Rāmā. Sundara. 52. 14 c-d–15. ६. न दूतवध्यां for दूता न वध्या इति मु० रा० ७. दृष्टा बहवो हि दण्डाः for दण्डा बहवः प्रदिष्टाः इति मु० ८. वधस्तु दूतस्य न नः श्रुतोऽपि for दूतस्य दण्डो हि वधो न दृष्टः इति मु० रा० ९. 216. 1-7 a-b, 9-38. १०. आक्षिप्य for आक्षेप० इति मु० मत्स्य०. ११. तथा वचः for कदाचन इति मु० मत्स्य० १२. तस्य for त्वस्य इति मु० मत्स्य०.

[1]यथार्थमस्य वक्तव्यं स्वस्थे चेतसि पार्थिव !
स्वार्थं सुहृद्भिर्वक्तव्यो न स्वयं हि कदाचन[2] ॥ ७३ ॥
कार्यातिपातः सर्वेषु रक्षितव्यः प्रयत्नतः ।
नच हिंस्यं धनं[3] किञ्चिन्नियुक्तेन च कर्मणि ॥ ७४ ॥
नोपेक्ष्यं[4] तस्य मानं[5] च तथा राज्ञः प्रियो भवेत् ।
राज्ञश्च न तथा कार्यं वेषभाषितचेष्टितम् ॥ ७५ ॥
राजलीला न कर्तव्या तद् द्विष्टं[6] च विवर्जयेत् ।
[7]अन्तःपुरधनाध्यक्षैर्वैरिभूतैर्निराकृतैः ।
[8]शंसनं न व्रजेद्राजन् ! विना पार्थिवशासनात् ॥ ७६ ॥
निःस्नेहतां चावमानं प्रयत्नेन तु गोपयेत् ।
यच्च गुह्यं भवेद्राज्ञो न तल्लोके प्रकाशयेत् ॥ ७७ ॥
नृपेण श्रावितं यत्स्याद् गुह्याद् गुह्यं नृपोत्तम !
न तत्संश्रावयेल्लोके तथा राज्ञः प्रियो[9] भवेत् ॥ ७८ ॥
आज्ञाप्यमाने चान्यस्मिन्समुत्थाय त्वरान्वितः ।
अहं[10] किं करवाणीति वाच्यो राजा विजानता ॥ ७९ ॥
कार्यावस्थां च विज्ञाय कार्यमेतत्तथा[11] भवेत् ।
सततं क्रियमाणेऽस्मिंल्लाघवं तु [12]भवेद् ध्रुवम् ॥ ८० ॥
राज्ञः प्रियाणि वाच्यानि न चात्यर्थं पुनः पुनः ।
न हास्यशीलस्तु भवेन्न चापि भृकुटीमुखः ॥ ८१ ॥
नातिवक्ता न निर्वक्ता नच मात्सरिकस्तथा ।
आत्मसम्भावितश्चैव न भवेत्तु कथञ्चन ॥ ८२ ॥
दुष्कृतानि नरेन्द्रस्य नतु सङ्कीर्तयेत्कचित् ।

---

१. परार्थं॰ for यथार्थं॰ इति मु॰ मत्स्य॰. २. तु कथञ्चन for हि कदाचन इति मु॰ मत्स्य॰. ३. हिंस्यं धनं for हिंस्याद्धनम् इति मु॰ मत्स्य॰. ४. नोपेक्ष्यः for नोपेक्ष्यम् इति मु॰ मत्स्य॰. ५. मानश्च for मानं च इति मु॰ मत्स्य॰. ६. तद्विद्विष्टं च वर्जयेत् for तद् द्विष्टं च विवर्जयेत् इति मु॰ मत्स्य॰. ७. ॰जना॰ for ॰धना॰ इति मु॰ मत्स्य॰. ८. संसर्गम् for शंसनम् इति मु॰ मत्स्य॰. ९. राज्ञोऽप्रियो for राज्ञः प्रियो इति मु॰ मत्स्य॰. १०. किमहम् for अहं किम् इति मु॰ मत्स्य. ११. ॰मेव यथा for ॰मेतत्तथा इति मु॰ मत्स्य॰. १२. प्रयो॰ for भवे॰ इति मु॰ मत्स्य॰

वस्त्रमस्त्रमलङ्कारं राज्ञा द ' तु धारयेत् ॥ ८३ ॥
औदार्येण न तद्देयमन्यस्मै भूतिमिच्छता ।
न चैवात्यशनं कार्यं दिवा स्वप्नं न कारयेत् ॥ ८४ ॥
नानिर्दिष्टे तथा द्वारे प्रविशेत्तु कथञ्चन ।
नच पश्येत्तु राजानमयोग्यासु च भूमिषु ॥ ८५ ॥
राज्ञस्तु दक्षिणे पार्श्वे वामे वोपविशेत्तदा ।
पुरस्ताच्च तथा पश्चादासनं तु विगर्हितम् ॥ ८६ ॥
जृम्भां निष्ठीवनं कासं कोपं पर्यस्तिकाश्रयम् ।
[1]भ्रुकुटिवातमुद्गारं तत्समीपे विवर्जयेत् ॥ ८७ ॥
स्वयं तत्र न कुर्वीत स्वगुणाख्यापनं बुधः ।
स्वगुणाख्यापने युक्त्या परमेव प्रयोजयेत् ॥ ८८ ॥
हृदयं निर्मलं कृत्वा परां भक्तिमुपाश्रितैः ।
अनुजीविगणैर्भाव्यं नित्यं राज्ञामतन्द्रितैः ॥ ८९ ॥
शाठ्यं लौल्यं च पैशुन्यं नास्तिक्यं क्षुद्रता तथा ।
चापल्यं च परित्याज्यं नित्यं [2]राजानुजीविभिः ॥ ९० ॥
श्रुतेन विद्याशिल्पैश्च संयोज्यात्मानमात्मना ।
राजसेवां ततः कुर्याद् भूतये भूतिवर्धनीम् ॥ ९१ ॥
नमस्कार्याः सदा चास्य पुत्रवल्लभमन्त्रिणः ।
सचिवैश्चास्य विश्वासो नतु कार्यः कथञ्चन ॥ ९२ ॥
अपृष्टश्चास्य न ब्रूयात्कामं ब्रूयात्तथापदि ।
हितं [3]पथ्यं च वचनं हितैः सह सुनिश्चितम् ॥ ९३ ॥
चित्तं चैवास्य विज्ञेयं नित्यमेवानुजीविना ।
भर्तुराराधनं कुर्याच्चित्तज्ञो मानवः सुखम् ॥ ९४ ॥
रागापरागौ चैवास्य विज्ञेयौ भूतिमिच्छता ।
त्यजेद्विरक्तं नृपतिं रक्ताद् वृत्तिं तु कारयेत् ॥ ९५ ॥
विरक्तः कारयेन्नाशं विपक्षाभ्युदयं तथा ।
आशावर्धनकं कृत्वा फलनाशं करोति च ॥ ९६ ॥
अकोपोऽपि सकोपाभः प्रसन्नोऽपि च निष्फलः ।

---

१. भ्रुकुटिं वान्त० for भ्रुकुटिवात० इति मु० मत्स्य०. २. राज्ञोऽनु० for राजानु० इति मु० मत्स्य०. ३. तथ्यम् for पथ्यम् इति मु० मत्स्य०.

वाक्यं स मन्दं वदति[1] वृत्तिच्छेदं करोति च[2] ॥ ९७ ॥
प्रदेशवाक्यैर्मुदितो[3] न सम्भावयतेऽन्यथा[4] ।
आराधनासु सर्वासु सुप्तश्च विचेष्टते ॥ ९८ ॥
कथासु दोषं क्षिपति वाक्यभङ्गं करोति च ।
[5]लज्जतेऽभिमुखश्चैव गुणसङ्कीर्तनेऽपि च ॥ ९९ ॥
दृष्टिं क्षिपत्यथान्यत्र[6] क्रियमाणे च कर्मणि ।
विरक्तलक्षणं ह्येतच्छृणु रक्तस्य लक्षणम् ॥ १०० ॥
दृष्टया[7] प्रसन्नो भवति वाक्यं गृह्णाति चाऽऽदरात् ।
कुशलादिपरिप्रश्नी[8] सम्प्रयच्छति चाऽऽसनम् ॥ १०१ ॥
विविक्तदर्शने चास्य रहस्येनं न शङ्कते ।
जायते हृष्टवदनः श्रुत्वा तस्य तु सङ्कथाम्[9] ॥ १०२ ॥
अप्रियाण्यपि वाक्यानि तदुक्तान्यभिनन्दते ।
उपायनं च गृह्णाति स्तोकमप्यादरात्तथा ॥ १०३ ॥
कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा ।
इति रक्तस्य कर्तव्या सेवा रविकुलोद्वह !
आपत्सु न त्यजेत्पूर्वं विरक्तमपि सेवितम् ॥ १०४ ॥
मित्रं न चाऽऽपत्सु तथा च भृत्यं
त्यजन्ति ये निर्गुणमप्रमेयम् ।
प्रभुं[10] विशेषेण च ते व्रजन्ति
सुरेन्द्रधामामरवृन्दजुष्टम् ॥ १०५ ॥

अथ दुर्गाणि ( ५ )

तत्र याज्ञवल्क्यः[11]—
रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ।
तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ॥ १ ॥

---

१. च सन्दं वक्ति for स मन्दं वदति इति मु० मत्स्य० २. वै for च इति मु० मत्स्य०. ३. ०वाक्यमुदितो for ०वाक्यैर्मुदितो इति मु० मत्स्य० ४. नच सम्भावयेत्तथा for न सम्भावयतेऽन्यथा इति मु० मत्स्य०. ५. लज्यते विमुख० for लज्जतेऽभिमुख० ६. क्षिपति चान्यत्र for क्षिपत्यथान्यत्र इति मु० मत्स्य०. ७. दृष्ट्वा for दृष्टया इति मु० मत्स्य० ८. ०परिप्रश्न for ०परिप्रश्नी इति मु० मत्स्य० ९. तत्कथाम् for सङ्कथाम् इति मु० मत्स्य०. १०. विभुम् for प्रभुम् इति मु० मत्स्य०. ११. I. 321.

पशव्यम्=पशुभ्यो हितम्। जाङ्गलम्=उच्चभूभागप्रायम्।

मनुः[1]—

जाङ्गलं सस्यसम्पन्नमार्यप्रायमनाविलम्।
रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत्॥२॥

मत्स्यपुराणे[2]—

वैश्यशूद्रजनप्रायमनाहार्यं तथा परैः।
किञ्चिद्ब्राह्मणसंयुक्तं बहुकर्मकरं तथा॥३॥
अदेवमातृकं रम्यमनुरक्तजनावृतम्[3]।
करैरपीडितं चापि[4] बहुपुष्पफलं तथा॥४॥
अगम्यं परचक्राणां तद्वासगृहमापदि।
समं[5] दुःखसुखं[5] राज्ञः सततं च प्रिये स्थितम्[6]॥५॥
सरीसृपविहीनं च व्यालतस्करवर्जितम्[7]।
एवंविधं यथालाभं राजा विषयमावसेत्॥६॥

मनुः—

धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा।
नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम्॥७॥

धन्व=मरुभूमिः। महीदुर्गम्=अतिनिम्नोन्नता भूमिः। वार्क्षम्=वनदुर्गम्।

बृहस्पतिः—

आत्मदारार्थलोकानां सञ्चितानां तु गुप्तये।
नृपतिः कारयेद् दुर्गं प्राकारद्वारसंयुतम्॥८॥

मनुः[8]—

सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत्।
षाड्गुण्येन तेषां हि[10] गिरिदुर्गं विशिष्यते॥९॥

तथा—

एकः शतं योधयति प्रासादस्थो[11] धनुर्धरः।

---

१. 7. 69. २. 217. 2—5. ३. ०जनान्वितम् for जनावृतम् इति मु० मत्स्य०. ४. चापि for वापि इति मु० मत्स्य०. ५ समदुःख for समं दुःख इति मु० मत्स्य०. ६. सततं प्रियमास्थितम् for सततं च प्रिये स्थितम् इति मु० मत्स्य० ७. व्याघ्र० for व्याल० इति मु० मत्स्य० ८. 7. 70. ९. 7. 71, 74. १०. एषां हि षाड्गुण्येन for षाड्गुण्येन तेषां हि इति मु० मत्स्य०. ११. प्राकार० for प्रासाद० इति मु० मत्स्य०,

शतं दशसहस्राणि तस्माद् दुर्गं विशिष्यते'[1] ॥ १० ॥

बृहस्पतिः—

भूपानामिन्धनरसैर्वेत्रशष्पान्नवाहनैः ।
यन्त्रायुधैश्च विविधैः स्निग्धैः शूरैर्नरैर्युतम् ॥ ११ ॥
वेदविद्याविदो विप्रान् क्षत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥ १२ ॥
अनाच्छेद्याः करास्तेभ्यः प्रदद्याद् गृहभूमयः ।
मुक्ताः भाव्याश्च नृपतिर्लेखयित्वा स्वशासने ॥ १३ ॥
नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं सदा ।
पौराणां कर्म कुर्युस्ते सन्दिग्धे विनयं तथा ॥ १४ ॥
समा निम्नोन्नता चापि यत्र भूमिर्यथाविधा ।
शालाट्टपरिखाद्याश्च कर्तव्याश्च तथाविधाः ॥ १५ ॥
समन्तात्तत्र वेश्मानि कुर्युः प्रकृतयस्ततः ।
द्विजवैश्यवणिक्शिल्पिकारुका रक्षकास्तथा ॥ १६ ॥
स्थलावस्थाननिष्काशप्रमश्वभ्रचतुष्पथान् ।
समाजविक्रयस्थानगोत्रजांश्चैव कल्पयेत् ॥ १७ ॥

स्निग्धैः=अनुरक्तैः । भूमय इति विभक्तिव्यत्ययः ।

मत्स्यपुराणे[2]—

गोपुरं सकवाटं[3] च तत्र स्यात्सुमनोहरम् ।
सपताकगजारूढो[4] येन राजा विशेत्पुरम् ॥ १८ ॥
चतस्रश्च तथा तत्र कार्याश्चापणवीथयः[5] ।
एकस्मिंस्तत्र वीथ्यग्रे देववेश्म भवेद् दृढम् ॥ १९ ॥
वीथ्यग्रे च द्वितीयेऽत्र राजवेश्म विधीयते ।
धर्माधिकरणं कार्यं वीथ्यग्रे च तृतीयके ॥ २० ॥
चतुर्थे चैव[6][7] वीथ्यग्रे गोपुरं तु[8] विधीयते ।

१. विधीयते for विशिष्यते इति मु० मत्स्य०. २ 217.9-14. ३. सकपाटं for सकवाटं इति मु० मत्स्य० ४ सपताक for सपताक इति मु०. मत्स्य ५. ०स्त्वापन० for ०श्चापण० इति मु० मत्स्य०. ६ च for ०श्च इति मु० मत्स्य०. ७ स्वय for चैव इति मु० मत्स्य० ८ च for तु इति मु० मत्स्य०.

आयतं चतुरस्रं वा वृत्तं वा कारयेत्पुरम् ॥ २१ ॥
[1]शुक्तिहीनं त्रिकोणं च यवमध्यं तथैव च ।
अर्धचन्द्रप्रकारं च वज्राकारं च कारयेत् ॥ २२ ॥
अर्धचन्द्रं प्रशंसन्ति नदीतीरेषु तद्वशात् ।
अन्यत्र तन्न कर्तव्यं प्रयत्नेन विजानता ॥ २३ ॥

गोपुरम्=पुरद्वारम् । आयतम्=दीर्घम् । शुक्तिहीनम्=कोणरहितम् ।

बृहस्पतिः—

दुर्गमध्ये गृहं कुर्याज्जलवृक्षान्वितं पृथक् ।
प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम् ॥२४॥
माल्यधूपासनोपेतां वीररत्नसमन्विताम् ।
प्रतिमालेख्यदेवैस्तु युक्तामग्न्यम्बुना तथा ॥ २५ ॥

मत्स्यपुराणे[2]—

राज्ञः कोशगृहं कार्यं दक्षिणे राजवेश्मनः ।
तस्यापि दक्षिणे भागे गजस्थानं विधीयते ॥ २६ ॥
गजानां प्राङ्मुखी शाला कर्तव्या वाप्युदङ्मुखी ।
आग्नेये च तथा भागे आयुधागारमिष्यते ॥ २७ ॥
महानसं च धर्मज्ञ ! कर्मशाला[3] तथा परा[4] ।
गृहं पुरोधसा कार्यं वामतो राजवेश्मनः ॥ २८ ॥
मन्त्रिवेदविदश्चैव[5] चिकित्साकर्तुरेव च ।
तत्रैव च तथाभागे कोष्ठागारं विधीयते ॥ २९ ॥
गवां स्थानं तथैवात्र तुरगाणां तथैव च ।
उत्तराभिमुखा श्रेणी तुरगाणां तथैव च[6] ॥ ३० ॥
प्राङ्मुखा वाऽथ धर्मज्ञ ![7] परिशिष्टास्तु गर्हिताः ।
तुरगास्ते तथा धार्याः प्रदीपैः सर्वरात्रिकैः ॥ ३१ ॥
कुक्कुटान्वानरांश्चैव मर्कटांश्च विशेषतः ।

---

१. मुक्ति० for शुक्ति० इति मु० मत्स्य०. २. 217. 15—41, 87; 219. २-८a-b. ३ ०शाला: for ०शाला इति मु० मत्स्य०. ४. परा: for परा इति मु० मत्स्य०. ५. ०विदाश्चैव for ०विदश्चैव इति मु० मत्स्य०. ६. विधीयते for तथैव च इति मु० मत्स्य०. ७. दक्षिणाभिमुखा वाथ for प्राङ्मुखा वाऽथ धर्मज्ञ इति मु० मत्स्य०.

धारयेदश्वशालासु सवत्सां धेनुमेव च ॥ ३२ ॥
अजाश्च धार्या यत्नेन तुरगाणां हितैषिणाम् ।
गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमः ॥ ३३ ॥
अस्तंगते न कर्तव्यो देवदेवे दिवाकरे ।
ततस्तत्र[1] यथास्थानं राजा विज्ञाय सारथिम्[2] ॥ ३४ ॥
दद्यादावसथस्थानं सर्वेषामनुपूर्वशः ।
योधानां शिल्पिनां चैव सर्वेषामविशेषतः ॥ ३५ ॥
दद्यादावसथान् दुर्गे मन्त्रकालविदां शुभान् ।
गोवैद्यानश्ववैद्यांश्च गजवैद्यांस्तथैव च ॥ ३६ ॥
आहरेत भृशं राजा दुर्गे हि प्रबला रुजः ।
कुशीलवानां विप्राणां दुर्गे स्थानं विधीयते ॥ ३७ ॥
न बहूनामतो दुर्गं[3] विना कार्यं तथा भवेत् ।
दुर्गे च यन्त्राः[4] कर्तव्या नानाप्रहरणान्विताः ॥ ३८ ॥
सहस्रघातिनो राज्ञा[5] तैस्तु रक्षा विधीयते ।
दुर्गे द्वाराणि गुप्तानि कार्याण्यपि च भूभुजा ॥ ३९ ॥
सञ्चयश्चात्र सर्वेषामायुधानां प्रशस्यते ।
धनुषां क्षेपणीयानां तोमराणां च पार्थिव ॥ ४० ॥
शराणामथ खड्गानां कवचानां तथैव च ।
लगुडानां गुडानां च [6]हुडानां परिघैः सह ॥ ४१ ॥
अश्मनां च प्रभूतानां मुद्गराणां तथैव च ।
त्रिशूलानां पट्टिशानां [7]कणपानां च पार्थिव ॥ ४२ ॥
प्रासानां च सशूलानां शक्तीनां च नरोत्तम !
परश्वधानां चक्राणां वर्मणां चर्मभिः सह ॥ ४३ ॥
कुद्दालरज्जुवेत्राणां [8]पिटकानां तथैव च ।

---

१ तत्र तत्र for ततस्तत्र इति मु० मत्स्य०. २. सारथीन् for सारथिम् इति मु० मत्स्य०. ३. दुर्गे for दुर्गम् इति मु० मत्स्य०. ४ तत्र for यन्त्राः इति मु० मत्स्य०. ५. राजन् for राज्ञा इति मु० मत्स्य० ६. हुडानां for हुडानां इति मु० मत्स्य०. ७. कुठाराणाम् for कणपानाम् इति मु० मत्स्य०. ८. पीठकानां for पिटकानाम् इति मु० मत्स्य०.

[1]हिमकानां च दारूणामङ्गाराणां च सञ्चयः[2] ॥४४॥
सर्वेषां शिल्पिभाण्डानां सञ्चयश्चात्र इष्यते[3] ।
वादित्राणां च सर्वेषामोषधीनां तथैव च ॥ ४५ ॥
यवसानां प्रभूतानामिन्धनस्य च सञ्चयः ।
गुडस्य सर्वतैलानां गोरसानां तथैव च ॥ ४६ ॥
वसानामथ मज्जानां स्नायूनामस्थिभिः सह ।
गोचर्मपट्टानां च धान्यानां सर्वतस्तथा ॥ ४७ ॥
तथैवाभ्रपटानां च यवगोधूमयोरपि ।
रत्नानां सर्ववस्त्राणां लोहानामप्यशेषतः ॥ ४८ ॥
कलायमुद्गमाषाणां चणकानां तिलैः सह ।
तथा च सर्वसस्यानां पांसुगोमययोरपि ॥ ४९ ॥
शणसर्जरसम्भूर्जं[4] जतु लाक्षां च टङ्कणम् ।
राजा सञ्चिनुयाद् दुर्गे यच्चान्यदपि किञ्चन ॥ ५० ॥
कुम्भेष्वाशीविषाः[5] कार्या व्यालसिंहादयस्तथा ।
मृगाश्च पक्षिणश्चैव रक्ष्यास्ते च परस्परम् ॥ ५१ ॥
स्थानानि च विरुद्धानां सुगुप्तानि पृथक् पृथक् ।
कर्तव्यानि महाभाग ! यत्नेन पृथिवीक्षिता ॥ ५२ ॥

यन्त्रायुधाट्टालमयोपपन्नं[6]
समग्रधान्यौषधिसम्प्रयुक्तम् ।
वणिग्जनैश्चावृतमावसेत
दुर्गं सुगुप्तं[7] नृपतिः सदैव ॥५३॥

तथा—

शिरीषोदुम्बरशमीबीजपूर्णाघृतप्लुतम् ।
क्षुधो न जायते राजन् ! मासार्धस्य पुरातनैः ॥ ५४ ॥

१. [illegible] for हिमकानाम् इति गु० मत्स्य० २. सञ्चयः for सञ्चयाः इति गु० मत्स्य० ३. [illegible] for इष्यते इति गु० मत्स्य०. ४. ०सर्जरसं भूर्जम् for ०सर्जरसम्भूर्जम् इति गु० मत्स्य०. ५. कुम्भास्वाशीविषैः for कुम्भेष्वाशीविषाः इति गु० [illegible] for [illegible] इति गु० मत्स्य० ७. सुपुप्तम् for सुगुप्तम् इति [illegible] इति गु० मत्स्य०.

[1]कसेरुत्पलमूलानि इक्षुमूलं तथा विषम्।
दूर्वाक्षीरघृतैर्मण्डः सिद्धोऽयं माक्षिक[2] परः ॥ ५५ ॥
नरः शस्त्रहतः प्राप्य तस्यास्थि अरणिर्भवत्[3]।
कल्माषवेणुना तत्र जनयेत्तु विभावसुम् ॥ ५६ ॥
गृहं[4] त्रिरपसव्यं तु क्रियते यत्र पार्थिव।
नान्योऽग्निर्ज्वलते तत्र नात्र कार्या विचारणा ॥ ५७ ॥
[5]कार्पासास्थिभुजङ्गस्य तथा[6] निर्मोचनं भवेत्।
सर्पनिर्वासने धूपः प्रशस्तः सततं गृहे ॥ ५८ ॥
[7]सामुद्रसैन्धवयवैर्विद्युद्दग्धा च मृत्तिका।
तयानुलिप्तं यद्वेश्म नाग्निना दह्यते नृप।
दिवा च दुर्गे रक्ष्योऽग्निर्वाति वाते विशेषतः ॥ ५९ ॥

देवीपुराणे[8]—

इन्द्र उवाच—

कीदृशं तु पुरं कार्यं नगरं कीदृशं शुभम्।
कस्मिन् स्थाने सुरश्रेष्ठ! एतदिच्छामि वेदितुम् ॥ ६० ॥

ब्रह्मोवाच—

सर्वौषधिभवे देशे सर्वलोकसुखावहे।
पूर्वोत्तरप्लवे स्थाने कार्यं शक्र! पुरादिकम् ॥ ६१ ॥
शर्कराश्मरहिते कटुकण्टकवर्जिते।
सहृते पांसुरहिते कुशादिभिरनावृते ॥ ६२ ॥
चलगन्धसमायुक्ता [9]महीखातोपलक्षिता।
चण्डालपतितत्यक्तशरावशकलैर्विना ॥ ६३ ॥

---

१ कशेरुफल० for कसेरुत्पल० इति मु० मत्स्य० २ मासिक for माक्षिक इति मु० मत्स्य० ३ प्राप्तो न तस्य मरणं भ० for प्राप्य तस्यास्थि अरणिर्भ० इति मु० मत्स्य० ४ गृहे for गृहम् इति मु० मत्स्य० ५ ०सास्थि for ०सास्थि० इति मु० मत्स्य० ६ तेन for तथा इति मु० मत्स्य० ७ ०यवा for ०यवैर् इति मु० मत्स्य० ८ The following verses from Devipurana are quoted by Mitramisra in his RP, PP 214—219 They are not found in the extant Devipu ९ ०स्वादो० for ०खातो० MS

देवावासपरित्यक्ता निराबाधा मनोरमा ।
उदगाधिस्रवाऽगाधा वैरग्यादिविवर्जिता ॥ ६४ ॥
शुद्धा सा दहनाद्यैश्च अथ चण्डेश्वरान्विता ।
सर्वेश्वरयुता वापि अन्यथा भयदा मही ॥ ६५ ॥
पूर्ववर्णाविपर्यस्ता स्थानकालादिसूत्रगा[1] ।
स्वामिश्रेष्ठिपुरादीनां भयदा जायते[2] मही ॥ ६६ ॥
कश्मलाद्यैः परिक्लिष्टा पूतनादिसमाकुला ।
पताकी [3]वर्जनीया तु सर्वदोषकरी मही ॥ ६७ ॥
वत्सरं या परित्यक्ता [4]कृष्याधान्यरहा च या ।
सा मही शुभदा ज्ञेया या च तृप्तिकरी भवेत् ॥ ६८ ॥
रक्षया देव्यः सदैवात्र पूजनीयाः स्वभागगाः ।
स्थानानि कल्पयेत्तासामधिवासं तु कारयेत् ॥ ६९ ॥

चण्डेश्वरः=महादेवस्य गणविशेषः । अधिवासः=स्थापनम् । इति पुरभूशुद्धिः ॥

तथा—

चतुर्दण्डः प्रकर्तव्यो भूमावादौ परिग्रहः ।
गां सवत्सां समादाय कुम्भं धान्यमयं तथा ॥ ७० ॥
सवस्त्रं हेमगर्भं तु सहकारदलान्विताम् ।
पृथ्वीं संकल्पयेत्तस्मिन्मेरुकर्णिकशोभिताम् ॥ ७१ ॥
वनशैलसमायुक्तां सागरैः परिवेष्टिताम् ।
एवं सम्पूजयित्वा तु देवदेवं त्रिलोचनम् ॥ ७२ ॥
*कुमारादिशिवाद्यैश्च विचार्यादिमहामहीम् ।*
सूर्यादिलोकपालादिनागयक्षादिदेवताः ॥ ७३ ॥
पूर्वं सम्पूजयित्वा तु पश्चाद्द्यादिशां वलिम् ।
स्वप्नमाणवकं जप्त्वा शेते तत्र यथासुखम् ॥ ७४ ॥
आचार्यः सूत्रधारश्च शुभं स्वप्नं निशात्यये ।
निमित्तं शकुनं दृष्ट्वा सूत्रयेल्लक्षितां दिशम् ॥ ७५ ॥

---

१. ०कालवि० for ०कालादि० RP. २. ज्ञायते for जायते RP.
३. पताकावर्ज० for पताकी वर्ज० RP. ४. कृष्टा for कृष्या० RP.

स्वप्नमाणवकं ' यज्जाग्रत'' इत्यादि ।

चित्रा स्वात्यन्तरे पूर्वा पुष्यविश्वसमागमे ।
उत्तरा ध्रुवमध्यस्था शेषाः सिद्धा यथागमम् ॥ ७६ ॥

चित्रास्वात्योरुदितयोर्मध्ये या तथा पुष्यमपानक्षत्राभ्यां चार्जवेन संयुता सा पूर्वा दिगित्यर्थः ।

शंकुना तदभावे तु पूर्वाशां साधयेद् द्विजः ।
एवं दिशासु सिद्धासु सूत्रपातं समाचरेत् ॥ ७७ ॥
आचार्यं पूजयित्वा तु सूत्रधारं द्विजोत्तमान् ।
देवतायतनं पूर्वमाचार्यब्राह्मणौकसम् ॥ ७८ ॥
राजधाम तु शेषांस्तु गृहान्वर्णक्रमाद् गुरुः ।
पुरं वृत्तायतं कार्यं त्र्यस्रं[2] वा चतुरस्रकम् ॥ ७९ ॥
यथास्थानविभागेन हट्टशोभासमन्वितम् ।
राजधामाग्रतः कार्यं देवधाम अथापि वा ॥ ८० ॥
सुसूत्रं देवतायुक्तं शिवमातृगणावृतम् ।
मङ्गला धनुहा कार्या मध्यान्ते[3] सर्वसिद्धिदा ॥ ८१ ॥
न सूर्यो वह्रियामे वा नैऋते वा हरिः क्वचित् ।
न विष्णुः पश्चिमे सौम्ये वायव्यां कारयेच्छिवम् ॥ ८२ ॥
कृते विनश्यते कर्ता तत्स्थाने चोद्दशं भवेत् ।
देवो न पूज्यते तत्र तस्मिन् स्थाने स्वके शुभे ॥ ८३ ॥
विसूत्रेषु प्रवक्ष्यामि येन शान्तिः शुभं भवेत् ।
नगरायां पुरायां च देवानां गोपुरादिषु ॥ ८४ ॥
विमार्गेषु शिवः शस्तः [4]समुखः सौम्यभागगः[5] ।
सौम्याग्रे सर्वतो दुर्गा[6] पुरं नन्दति रक्षितम् ॥ ८५ ॥
तस्माद् दुर्गा[7] प्रकर्तव्या[8] नगरेषु पुरादिषु ।
महालक्ष्म्यादिका शक्र ! क्षेमकारी सचण्डिका ॥ ८६ ॥

---

१. VS. 34 I. २ दुव्यस्रम् for त्र्यस्रम् RP ३. सर्वान्ते for मध्यान्ते RP. ४. सम्मुख. for समुखः RP. ५. The phrase 'सौम्यभागगः' is missing in RP ६. दुर्गे for दुर्गा MS ७. ०दुर्गे for ०दुर्गा MS ८. ०व्यो for ०व्या MS.

मङ्गला मङ्गलारूपा महिषघ्नी शिवानना[1] ।
यथास्थानविभागस्था सर्वलोके[2] सुखावहा ॥ ८७ ॥
महालक्ष्मीः पुरः शस्ता आग्नेये महिषापहा ।
याम्यां शिवा शुभा प्रोक्ता चर्चिका पश्चिमे पुरम्[3] ॥८८॥
उत्तरे शुभदा क्षेमा पञ्चैताः शान्तिदाः पुरे ।
नगरे नव कर्तव्या दुर्गे पञ्चैव चण्डिकाः ॥ ८९ ॥

तथा—

नगरं देवतावीतं समस्तप्रकृतीयुतम् ।
सप्तपञ्चपुरैः कार्यं मण्डपैरुपशोभितम् ॥ ९० ॥
कोष्ठकाः सश्रियः कार्या मण्डपादग्रतः शुभाः ।
एवं देवालयोपेतं सर्ववर्णसमन्वितम् ॥ ९१ ॥
नवदुर्गासमायुक्तं नगरं परिकीर्तितम् ।
पुरं हट्टसमायुक्तं देवतादिसमाकुलम् ॥ ९२ ॥
हट्टं हेममणिवस्त्रपत्रोर्णाचर्मविक्रयम् ।
सुरापेयादिकं यस्मिंस्तत्पुरं पत्तनं शृणु ॥ ९३ ॥
असंहतं समं कार्यं वणिक्हट्टं सुशोभनम् ।
सुरनामं स्वनामं वा पत्तनं सर्वकामदम् ॥ ९४ ॥
अवेधं कारयेत्पङ्कगर्तादिभिः सुरोत्तम !
उभयोरन्तरे कार्यं देवतायतनादिकम् ॥ ९५ ॥
देवसद्मविहीनं तु समदृष्टिगतं शुभम् ।
चिह्नदृष्टिगते देवे न दृष्टेः सन्निरूपणम्[4] ॥ ९६ ॥
समे मानसमायुक्ते कार्या दृष्टिः समा शुभा ।
ऊनाधिका न कर्तव्या व्यालसिंहादिनाऽऽवृता ॥ ९७ ॥
एवं कुर्यात्पुरे हट्टं प्राकारान्तर्गतं शुभम् ।
चतुर्हस्तं[5] समं कार्यं समसूत्रं सुशोभनम् ॥ ९८ ॥
पथस्समं पुरं कार्यं सममार्गविनिर्गमम् ।

---

१. शिवानरा for शिवानना RP. २. ०लोकसुखा० for ०लोके सुखा० RP.
३. पुरात् for पुरम् RP. ४. सुनिरूपणम् for सन्निरूपणम् RP. ५. ०हट्टं for ०हस्तं RP.

चतुष्पथानि शुद्धानि नित्य पूजायुतानि च ॥ ९९ ॥
देवान्तराणि कार्याणि स्वाधिकार्यावृतानि च ।
देवान्तरेषु मन्त्रज्ञा स्वे स्वे देशे शुभावहा ॥ १०० ॥
भिन्ना बहुप्रदा लोके यथा शस्त [1] परिग्रह ।
न शुभा मन्त्रहीनास्तु द्विजाद्या नैष्ठिकास्तथा ।
चर्चिकाद्यास्तथा शक्र [1] मन्त्रहीना भयावहा ॥ १०१ ॥
अग्रत पृष्ठतो देवा उभयो पार्श्वयोर्द्विजा ।
हस्तानां तु शत त्याज्य नृपराष्ट्रसुखार्थिभि ॥ १०२ ॥
दृष्टिभङ्गो न कर्तव्यो रक्षेद्देवीषु यत्नत ।
दण्डाष्टकसुविस्तीर्णे कृते राजा विनश्यति ॥ १०३ ॥
तस्माद् दृष्टि सदा देया तोरणान्तर्गता शुभा ।
अष्टहस्त सुशोभाढ्य शैलवृक्षमय च वा ॥ १०४ ॥
तोरण शस्यते देव्या वापी कूपजल वनम् ।
पूर्वोत्तरे तथैशान्यामाराम शुभद कृत ॥ १०५ ॥
देवीनां मातृकाणा च स भवेत्सर्वकामद ।
यथाशुभमहादैवाद्यच्च कालकृत भवेत् ॥ १०६ ॥
तत्सर्वं देवतागारे कृते भवति शोभनम् ।
बलिजाप्यक्रिया नित्य मातृकाणां शुभा भवेत् ॥ १०७ ॥
पुरपत्तनग्रामाणा ब्रह्मपुर्यं सकामदा ।
ब्रह्मविद्या कलोपेता यत्र वेदविदोऽवसन् ।
सा पुरी कमला नाम सर्वलोकसुखावहा ॥ १०८ ॥
विद्या ह्येका तथा द्वित्राश्चतस्रो यत्र संस्थिता ।
रुद्री देवी सविजया गायत्री च क्रमात्मना ॥ १०९ ॥
गृहा पङ्क्तिगता कार्या शुभवर्त्मऋजुस्थिता ।
पूर्वोत्तरसुमार्गस्था सजला देवतान्विता ॥ ११० ॥
ब्रह्मत्रिदशपूजार्थं मठादिमुपकल्पयेत् ।
पाठस्थानानि कुर्वीत शिवायतनवेधसो ॥ १११ ॥
पुरे वा नगरे वत्स [1] राजधान्या च पत्तने ।
दुर्गे हट्टे शुभा दृष्टिर्देवालयस्या समङ्गला ॥ ११२ ॥

---

१ शास्त्रपरि० for शस्त परि० RP

शिवलिङ्गगणेशानां धनदस्य विशेषतः ।
श्रियश्च सौम्यरूपायाः स्वामीशस्य शुभस्य च ॥ ११३ ॥
रक्षोदेवीषु चोग्रासु दृष्टिर्देया न चान्यथा ।
बाह्ये वनोपकण्ठे च नदीनदतटे यथा[1] ॥ ११४ ॥
प्रासादे चोत्तमा कार्या तीर्थहट्टानुगाऽथवा ।
वाराही भैरवी चोग्रा नारसिंही त्रैविक्रमा[2] ॥ ११५ ॥
पुरपत्तनगेहेषु दृष्टिर्वर्ज्या प्रयत्नतः ।
उग्रा दृष्टिर्हरेद्राष्ट्रं दारुणा नगरादिकम् ॥ ११६ ॥
नरसिंहवराहाणां दृष्टिर्हन्यात्प्रियं[3] जनम् ।
तस्माद् दृष्टिः शुभा कार्या समा सर्वगता ततः ॥ ११७ ॥
विवाहेऽपि शुभा दृष्टिः समा भवति नान्यथा ।
अतो यत्नेन देवानां दृष्टिः सौम्या प्रशस्यते ॥ ११८ ॥
ग्रहाणां सौम्यरूपाणां लग्ने दृष्टिः शुभा यथा[4] ।
पुरपत्तनदुर्गेषु तथा सौम्या शुभावहा ॥ ११९ ॥
एवं हट्टे पुरे दुर्गे देया दृष्टिः शुभा नृप !
शुभार्थे सौम्यरूपाणामुमायां परिवर्जयेत् ।
आवाहने जले वाथ उग्रा दृष्टिः शुभावहा ॥ १२० ॥

## अथ वास्तुकर्मविधिः ( ६ )

तत्र मत्स्यपुराणे[5]—

सूत उवाच—

अथातः सम्प्रवक्ष्यामि गृहकालविनिर्णयम् ।
यथाकालं शुभं ज्ञात्वा तदा भवनमारभेत् ॥ १ ॥
चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ।
वैशाखे [6]धनरत्नानि ज्येष्ठे मृत्युं तथैव च ॥ २ ॥
आषाढे भृत्यरत्नानि वस्त्रं[7] वर्यमवाप्नुयात् ।
श्रावणे [8]मित्रलाभं तु हानिं भाद्रपदे तथा ॥ ३ ॥

---

१. अयत्रा for यथा RP. २. त्रिविक्रमी for त्रैविक्रमा RP. ३. ०च्छ्रियम् for ०त्प्रियम् RP. ४. शुभावहा for शुभा यथा RP. ५. 253. 1—51. ६. धेनु० for धन० इति मु० मत्स्य०. ७. पशुवर्ग० for वस्त्रं वर्य० इति मु० मत्स्य०. ८. भृत्य० for मित्र० इति मु० मत्स्य०.

पत्नीनाशमाश्वयुजे[1] कार्तिके धनधान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतो भयम् ॥ ४ ॥
लाभं च बहुशो विद्यादग्निं माघे विनिर्दिशेत् ।
फाल्गुने काञ्चनं पुत्रानिति कालफलं[2] स्मृतम् ॥ ५ ॥
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् ।
[3]स्वातिर्हस्तोऽनुराधा च गृहारम्भे प्रशस्यते ॥ ६ ॥
आदित्यभौमवर्जं च सर्वे वारा शुभावहा ।
वज्रव्याघातशूलेषु[4] व्यतीपातातिगण्डयो. ॥ ७ ॥
[5]विष्कुम्भगण्डपरिघवर्जं [6]योगेषु कारयेत् ।
श्वेते मैत्रेयमाहेन्द्रगन्धर्वाभिजिद्रौहिणे[7] ॥ ८ ॥
तथा वैराजसावित्रे मुहूर्ते गृहमारभेत् ।
चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम्[8] ॥ ९ ॥
स्तम्भोच्छ्रायादि कर्तव्यमन्यत्तु परिवर्जयेत ।
प्रासादेष्वेवमेव स्यात्कूपवापीषु शस्यते[9] ॥ १० ॥
पूर्वं भूमिं परीक्षेत पश्चाद्वास्तु प्रकल्पयेत् ।
श्वेता रक्ता तथा पीता कृष्णा चैवानुपूर्वश ॥ ११ ॥
विप्रादे शस्यते भूमिरत. कार्यं परीक्षणम् ।
विप्राणां मधुरास्वादा कषाया क्षत्रियस्य तु ॥ १२ ॥
कषायकटुका तद्वद्वैश्यशूद्रेषु शस्यते ।
रत्निमात्रे तु वै गर्ते स्वनुलिप्ते च सर्वश ॥ १३ ॥
घृतमामशरावस्थं कृत्वा वर्तिचतुष्टयम् ।
ज्वालयेद् भूपरीक्षार्थं पूर्णं तत्सर्वदिङ्मुखम् ॥ १४ ॥
दीप्ता पूर्वादि गृह्णीयाद्वर्णानामनुपूर्वश ।

---

१. ०श्वा० for ०मा० इति मु० मत्स्य० २. ०बलम् for ०फलम् इति मु० मत्स्य० ३ स्वाती ह० for स्वातिर्ह० इति मु० मत्स्य० ४ वर्ज (र्ज्ये) व्याघातशूले च for वज्रव्याघातशूलेषु इति मु० मत्स्य० ५. विष्कम्भ० for विष्कुम्भ० इति मु० मत्स्य० ६ ०वज्र योगेषु ( न ) कारयेत् for ०वर्जं योगेषु कारयेत् इति मु० मत्स्य० ७ *For this line the published edition of matsyapu reads* स्वातौ मैत्रेऽथ माहेन्द्रे गान्धर्वाभिजिति रौहिणे ८ शुभलग्न निरीक्षयेत for लग्नं शुभनिरीक्षितम् इति मु० मत्स्य० ९ चैव हि for शस्यते इति मु० मत्स्य०.

वास्तुः सामुद्रिको नाम दीप्यते सर्वतस्तु यः ॥ १५ ॥
शुभदः सर्ववर्णानां प्रासादेषु गृहेषु च ।
रत्निमात्रं तु गर्तं [ वै[1]] परीक्ष्यं खातपूरणैः ॥ १६ ॥
अधिके श्रियमाप्नोति न्यूने हानिं समे समम् ।
फालकृष्टेऽथवा देशे सर्वबीजानि वापयेत् ॥ १७ ॥
त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि ।
ज्येष्ठोत्तरकनिष्ठा भूर्वर्जयेदितरां सदा ॥ १८ ॥
पञ्चगव्यौषधिजलैः परीक्षित्वाथ सेचयेत् ।
एकाशीतिपदं कृत्वा रेखाभिः कनकेन तु ॥ १९ ॥
पश्चात्पिष्टेन वालिप्य सूत्रेणालोड्य सर्वतः ।
दशपूर्वायता रेखा दश चैवोत्तरायताः ॥ २० ॥
सर्ववास्तुविभागेषु विज्ञेया नवका नव ।
एकाशीतिपदं कृत्वा वास्तुवित्सर्ववास्तुषु ॥ २१ ॥
पदस्थान्पूजयेद्देवांस्त्रिंशत्पञ्चदशैव तु ।
द्वात्रिंशद् बाह्यतः पूज्याः पूज्याश्चान्तस्त्रयोदश ॥ २२
नामतस्तान् प्रवक्ष्यामि स्थानानि च निबोधत ।
ईशानकोणादिसुरान्[2] पूजयेच विधानतः[3] ॥ २३ ॥
शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः ।
सूर्यः सत्यो भृशश्चैव आकाशो वायुरेव च ॥ २४ ॥
पूषा च वितथश्चैव गृहक्षतयमावुभौ ।
गन्धर्वो भृङ्गराजश्च मृगः पितृगणास्तथा ॥ २५ ॥
दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः ।
असुरः शोषपापौ च रोगोऽहिर्मुख्य[4] एव च ॥ २६ ॥
भल्लाटः सोमसूर्यौ[5] च अदितिश्च दितिस्तथा ।
बहिर्द्वात्रिंशदेते तु तदन्तश्चतुरः[6] शृणु ॥ २७ ॥

---

१. वै is supplied by the Editor. २ ०णादिषु तान् for ०णादिसुरान् इति मु० मत्स्य०. ३. पूजयेद्बुधो नरः for पूजयेच विधानतः इति मु० मत्स्य०. ४. ०हिमुख्य for ०हिर्मुख्य इति मु० मत्स्य०. ५. सोमसर्पौ for सोमसूर्यौ इति मु० मत्स्य०. ६. तदन्तस्तु ततः for तदन्तश्चतुरः इति मु० मत्स्य०.

ईशानादिचतुष्कोणो[1] संस्थितान् पूजयेद् बुधः ।
आपश्चैवाथ सावित्री[2] जयो रुद्रस्तथैव च ॥ २८ ॥
मध्ये चतुष्पदो[3] ब्रह्मा तस्याप्यष्टौ समीपगाः[4] ।
सर्वानेकान्तरान्विद्यात्पूर्वाद्यान्नामतः[5] शृणु ॥ २९ ॥
अर्यमा सविता चैव विवस्वान्विबुधाधिपः ।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ॥ ३० ॥
अष्टमश्चापवत्सस्तु परितो ब्रह्मणः स्मृताः ।
आपश्चैवापवत्सश्च पर्जन्योऽग्निर्दितिस्तथा ॥ ३१ ॥
पदिकानां [6]च वर्गोऽयमेवं कोणेष्वशेषतः ।
तन्मध्ये तु बहिर्वत्स[7] द्विपदास्ते तु सर्वतः[8] ॥ ३२ ॥
वंशानिदानीं वक्ष्यामि [9]रज्जूनपि पृथक् पृथक् ।
वायुं यावत्तथा रोगात्पितृभ्यः शिखिनं पुरः ॥ ३३ ॥
मुख्याद् भृशं तथा शेषाद्वितथं यावदेव तु ।
सुग्रीवाददितिं यावन्मृगात्पर्जन्यमेव च ॥ ३४ ॥
एते वंशाः समाख्याताः क्वचिद्रज्जव एव तु ।[10]
एतेषां यस्तु सम्पातः [11]पदमध्यं समं तथा ॥ ३५ ॥
मर्म चैतत्समाख्यातं त्रिशूलं कोणगं च यत् ।
स्तम्भन्यासेषु[12] वर्ज्यानि तुलावेधेषु सर्वदा ॥ ३६ ॥
कीलकुड्योपघातादि[13] वर्जयेद्यत्नतो नरः[14] ।
सर्वत्र वास्तुनिर्दिष्टः पितृवंशतरायनः[15] ॥ ३७ ॥

---

१. ०ष्कोणसं० for ०ष्कोणे सं० इति मु० मत्स्य० २. सावित्रो for सावित्री इति मु० मत्स्य०. ३. नवपदे for चतुष्पदो इति मु० मत्स्य०. ४. तस्याष्टौ च समीपगान् for तस्याप्यष्टौ समीपगाः इति मु० मत्स्य०. ५. साध्याने० for सर्वाने० इति मु० मत्स्य०. ६. तु for च इति मु० मत्स्य०. ७. ०विंशद् for ०र्वत्स इति मु० मत्स्य०. ८. सर्वशः for सर्वतः इति मु० मत्स्य०. ९. ऋजूनपि for रज्जूनपि इति मु० मत्स्य०. १०. क्वचिच्च जयमेव तु for क्वचिद्रज्जव एव तु इति मु० मत्स्य०. ११. पदं मध्यं for पदमध्यम् इति मु० मत्स्य०. १२. स्तम्भ for स्तम्भ० इति मु० मत्स्य०. १३. कीलोच्छिष्टो० for कीलकुड्यो० इति मु० मत्स्य०. १४. जनः for नरः इति मु० मत्स्य०. १५. पितृवंशान्तरायतः for पितृवंशतरायत. RP.; वैश्वानरायतः इति मु० मत्स्य०.

शिरस्यग्निः[1] समाविष्टो[2] मुखे चापः समाश्रितः ।
पृथ्वीधरोऽर्यमा चैव [3]स्तनयोस्तावधिष्ठितौ ॥ ३८ ॥
वक्षःस्थले [4]त्वापवत्सः पूजनीयः सदा बुधैः ।
नेत्रयोर्दितिपर्जन्यौ श्रोत्रेऽदितिजयन्तकौ ॥ ३९ ॥
सर्पेन्द्रावंससंस्थौ तु पूजनीयौ प्रयत्नतः ।
सत्यरोगादयस्तद्वद्बाहोः[5] पञ्च च पञ्च च ॥ ४० ॥
रुद्रश्च राजयक्ष्मा च वामहस्ते समास्थितौ ।
सावित्रः सविता तद्वद्धस्तं दक्षिणमाश्रितौ ॥ ४१ ॥
विवस्वानथ मित्रश्च जठरे संव्यवस्थितौ ।
पूषा च [6]राजयक्ष्मा च हस्तयोर्मणिबन्धने ॥ ४२ ॥
तथैवासुरशोषौ[7] तु वामपार्श्वे [8]समाश्रितौ ।
पार्श्वे तु दक्षिणे तद्वद्वितथः सगृहक्षतः ॥ ४३ ॥
उर्वोऽर्यमाम्बुपौ ज्ञेयौ जान्वोर्गन्धर्वपुष्पकौ ।
जङ्घयोर्भृंगु[9] सुग्रीवौ स्फिक्स्थौ दौवारिको मृगः ॥ ४४ ॥
जयः [10]शुक्रस्तथा मेढ्रे पादयोः पितरस्तथा ।
मध्ये नवपदो ब्रह्मा हृदये स तु पूज्यते ॥ ४५ ॥
चतुःषष्टिपदो वास्तुः प्रासादे ब्रह्मणा स्मृतः ।
ब्रह्मा चतुष्पदस्तत्र [11]कोणेष्वेकपदास्ततः ॥ ४६ ॥
बहिष्कोणेषु चाष्टौ[12] तु सार्द्धाश्चोभयतः स्थिताः[13] ।
[14]विंशतिर्द्विपदास्तेषां[15] चतुःषष्टिपदाः[16] स्मृताः ॥ ४७ ॥

---

१. मूर्धन्य० for शिरस्य० इति मु० मत्स्य०. २. समादिष्टो for समाविष्टो इति मु० मत्स्य०. ३. स्कन्धयो० for स्तनयो० इति मु० मत्स्य०. ४. चापवत्सः for त्वापवत्सः इति मु० मत्स्य०. ५. सूर्यसोमादय० for सत्यरोगादय० इति मु० मत्स्य०. ६. पाप० for राज० इति मु० मत्स्य०. ७. ०शेषो for ०शोषो इति मु० मत्स्य०. ८. ०पार्श्व for ०पार्श्वे इति मु० मत्स्य०. ९. ०भृंङ्ग० for ०भृंगु० इति मु० मत्स्य०. १०. जयशक्रौ त० for जयःशुक्रस्त० इति मु० मत्स्य०. ११. कोणेष्वर्ध०. for कोणेष्वेक० इति मु० मत्स्य० १२ वास्तौ for चाष्टौ इति मु० मत्स्य०. १३. ०संस्थिताः for ०तः स्थिताः इति मु० मत्स्य०. १४ ०ति द्वि० for ०तिर्द्वि० इति मु० मत्स्य०. १५. ०श्चैव for ०स्तेषां इति मु० मत्स्य०. १६. ०पदे for ०पदाः इति मु० मत्स्य०.

गृहारम्भे 'तु कण्डूति स्वाम्यङ्गे यत्र जायते ।
शल्यं त्वपनयेत्तत्र प्रासादे भवनेऽपि वा ॥ ४८ ॥
सशल्यं भयदं यस्मादशल्यं भयनाशनम्[2] ।
हीनाधिकाङ्गता वास्तो सर्वथा परिवर्जयेत ॥ ४९ ॥
नगरग्रामदेशेषु सर्वत्रैव प्रकल्पयेत् ।
चतुश्शालं त्रिशालं च द्विशालं चैकशालकम् ।
नामतस्तानि वक्ष्यामि स्वरूपेण द्विजोत्तमा ॥ ५० ॥

शुभनिरीक्षितम्=शुभग्रहनिरीक्षितम् ऐन्दवम्=मृगशिरः । दीप्तां पूर्वादिति—पूर्वां दिशमारभ्य प्रदक्षिणं वर्तिं सम्यक् प्रदीपने ब्राह्मणादीनां वर्णानां यथासङ्ख्य सुखाव हमित्यर्थः । खातपूर्यौ =खातस्य गर्तस्य तैरेव सम्बन्धिभिः पूर्यौ । पितृवशायत पितृगणादारभ्य वह्निं यावद्यो वंशः प्रसारितः तद्वदायतो वा वास्तुपुरुषः । अम्बुपो जलाधिपः । पुष्पको दन्तः जयशुक्र इत्यत्र जयशब्दः शुक्रवाची । तद्वत्कोणेष्वेकपदा इति । एकाशीतिपदे वास्तौ याः कोणेष्वेकपदा देवता इहापि तास्तथैव बोद्धव्याः । बहिष्कोणेषु चेत्यादि । प्रान्तकोणेषु चतुर्षु ये उभयपार्श्वे कोष्ठकास्तेष्वष्टौ देवताः सार्द्धा भवन्ति, देवताचतुष्टयसहिता भवन्तीत्यर्थः ।

सूत उवाच—

चतुश्शालं प्रवक्ष्यामि स्वरूपान्नामतस्तथा ।
चतुश्शालं [4]चतुर्द्वारैरलिन्दैः सर्वतो वृतम्[5] ॥ ५१ ॥[6]
नाम्ना तत्सर्वतोभद्रं शुभं देवनृपालये ।
पश्चिमद्वारहीनं तु नन्द्यावर्तं प्रचक्षते ॥ ५२ ॥
दक्षिणद्वारहीनं तु वर्धमानमुदाहृतम् ।
पूर्वद्वारविहीनं तु[7] स्वस्तिकं नाम विश्रुतम् ॥ ५३ ॥
रुचकं चोत्तरद्वारविहीनं तु[7] प्रचक्षते ।
सौम्यशालाविहीनं यत्त्रिशालं धन्यकं च तत् ॥ ५४ ॥
क्षेमवृद्धिकरं नृणां बहुपुत्रफलप्रदम् ।

---

१ ०पु for तु इति मु० मत्स्य २ शुभदायकम् for भयनाशनम् इति मु० मत्स्य० ३ तु वि० for परि० इति मु० मत्स्य० ४ So Mat yapu तु यद्वारै० MS ५ सुखम् for वृतम् इति मु० मत्स्य० ६ *Matsyapu* 254 1 44 ७ तत् for तु इति मु० मत्स्य०

शालया पूर्वया हीनं सुक्षेत्रमिति विश्रुतम् ॥ ५५ ॥
धन्यं यशस्यमायुष्यं शोकमोहविनाशनम् ।
चुल्ली तु याम्यया हीनं त्रिशालं शालया तु यत् ॥ ५६ ॥
कुलक्षयकरं नृणां सर्वव्याधिभयावहम् ।
हीनं पश्चिमया यत्तु पक्षघ्नं नाम तद्विदुः[1] ॥ ५७ ॥
मित्रबन्धुसुतान् हन्ति तथा [2]सर्पभयावहम् ।
याम्यापराभ्यां शालाभ्यां धनधान्यफलप्रदम् ॥ ५८ ॥
क्षेमवृद्धिकरं नृणां तथा पुत्रफलप्रदम् ।
यमसूर्यं च विज्ञेयं पश्चिमोत्तरशालकम् ॥ ५९ ॥
राजाग्निभयदं नृणां कुलक्षयकरं च यत् ।
उदक्पूर्वे तु शाले द्वे दण्डाख्यं तत्र[3] तद् भवेत् ॥ ६० ॥
अकालमृत्युभयदं परचक्रभयावहम् ।
चापाख्यं[4] याम्यपूर्वाभ्यां[5] शालाभ्यां यद्विशालकम् ॥६१॥
विपशस्त्राग्निभयदं[6] पराभवभयावहम् ।
चुल्ली पूर्वापराभ्यां [7]च सा भवेन्मृत्युसूचनी ॥ ६२ ॥
विधवत्वाय च[8] स्त्रीणामनेकभयकारकम् ।
कार्यमुत्तरयामाभ्यां शालाभ्यां भयदं नृणाम् ।
सिद्धार्थवर्जं[9] वर्ज्यानि द्विशालानि सदा बुधैः ॥ ६३ ॥

चतुष्किका सौम्यशाला उत्तरद्वारशाला । सिद्धार्थवर्जं याम्यापराभ्यां शालाभ्यां युक्तं यद् द्विशालं तद् विहाय ।

अथातः सम्प्रवक्ष्यामि भवनं पृथिवीपतेः ।
पञ्चप्रकारं तत्प्रोक्तमुत्तमादिविभेदतः ॥ ६४ ॥
अष्टोत्तरं हस्तशतं विस्तारश्चोत्तमो मतः ।
चतुर्ष्वन्येषु विस्तारो हीयते चाष्टभिः करैः ॥ ६५ ॥

१. तत्पुनः for तद्विदुः इति मु० मत्स्य०. २. सर्व० for सर्प० इति मु० मत्स्य०. ३. ०रुये यत्र० for ०रूयं तत्र इति मु० मत्स्य०. ४. धनाख्यं for चापाख्यं इति मु० मत्स्य०. ५. पूर्वयाम्याभ्याम् for याम्यपूर्वाभ्याम् इति मु० मत्स्य०. ६. तस्करस्त्रभयदं नृणाम् for विपशस्त्राग्निभयदम् इति मु० मत्स्य०. ७. तु for च इति मु० मत्स्य०. ८. वैधव्यदायकम् for विधवत्वाय च इति मु० मत्स्य०. ९. ०वस्य० for ०वर्जं इति मु० मत्स्य०.

चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ।
युवराजस्य वक्ष्यामि तथा भवनपञ्चकम ॥ ६६ ॥
षड्भिः षड्भिस्तथाशीतिर्हीयते तत्र विस्तरात् ।
त्र्यंशेन चाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ॥ ६७ ॥
सेनापतेः प्रवक्ष्यामि तथा भवनपञ्चकम् ।
चतुःषष्टिः [1]सुविस्तारः षड्भिः षड्भिः [2]प्रहीयते ॥ ६८ ॥
पञ्चस्वेतेषु दैर्घ्यञ्च षड्भागेनाधिकं भवेत् ।
मन्त्रिणामथ वक्ष्यामि तथा भवनपञ्चकम् ॥ ६९ ॥
चतुश्चतुर्विहीना[3] स्यात्करषष्टिः प्रविस्तरे ।
अष्टांशेनाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ॥ ७० ॥
सामन्तामात्यलोकानां वक्ष्ये भवनपञ्चकम् ।
चत्वारिंशत्तथाष्टौ च चतुर्भिर्हीयते क्रमात् ॥ ७१ ॥
चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वेतेषु शस्यते ।
शिल्पिनां कञ्चुकीनां च वेश्यानां गृहपञ्चकम् ॥ ७२ ॥
अष्टाविंशत्कराणां [4]तद्विहीनं विस्तरात्क्रमात् ।
द्विगुणं [5]दैर्घ्यमेवोक्तमध्यक्षेष्वेवमेव [6]तु ॥ ७३ ॥
[7]दूतकर्मान्तिकादीनां वक्ष्ये भवनपञ्चकम् ।
चतुर्थांशाधिकं दैर्घ्यं [8]विस्तराद् द्वादशैव [9]च ॥ ७४ ॥
अध्यर्ध[10] करहानिः[11]स्याद्विस्तरात्पञ्चसु[12] क्रमात् ।
दैवज्ञगुरुवैद्यानां सभास्तारपुरोधसाम् ॥ ७५ ॥
तेषामपि प्रवक्ष्यामि [13]क्रमाद्भवनपञ्चकम् ।
[14]चत्वारिंशत्प्रविस्ताराच्चतुर्भिर्हीयते क्रमात् ॥ ७६ ॥

---

१. चतुःषष्टिस्तु for चतुःषष्टिः सु० इति मु० मत्स्य०. २. षड्भिस्तु for षड्भिः प्र० इति मु० मत्स्य० ३. ०चतुर्भिर् for चतुर्वि० इति मु० मत्स्य० ४. तु वि० for तद्वि० इति मु० मत्स्य०. ५ ०वोक्तं मध्यमे० for ०वोक्तमध्यक्षे० इति मु० मत्स्य० ६ तत् for तु इति मु० मत्स्य०. ७. दूती for दूत० इति मु० मत्स्य०. ८. विस्तारो द्वा for विस्तराद् द्वा० इति मु० मत्स्य०. ९. तु for च इति मु० मत्स्य. १०. अर्धार्ध० for अध्यर्ध इति मु० मत्स्य०. ११. ०द्विस्ता० for ०द्विस्त०. १२. ०त्पञ्चशः for ०त्पञ्चसु इति मु० मत्स्य०. १३. तथा भवन० for क्रमाद्भवन० इति मु० मत्स्य०. १४. ०रिंशत्तु for रिंशत्प्र० इति मु० मत्स्य०.

पञ्चस्वेतेषु दैर्घ्यञ्च षड्भागेनाधिकं भवेत् ।
चातुर्वर्ण्यस्य[1] वक्ष्यामि सामान्यं गृहपञ्चकम् ॥ ७७ ॥
द्वात्रिंशद्वै[2] कराणां तु चतुर्भिर्हीयते क्रमात् ।
आषोडशादिति परं न्यूनमन्त्यावसायिनाम् ॥ ७८ ॥
दशांशेनाष्टभागेन त्रिभागेनाथ भागिकम्[3] ।
अधिकं दैर्घ्यमित्याहुर्ब्राह्मणादेः प्रशस्यते ॥ ७९ ॥
सेनापतेर्नृपस्यापि गृहयोरन्तरेण तु ।
नृपवासगृहं कार्यं भाण्डागारं तथैव च ॥ ८० ॥
सेनापतेर्गृहस्यापि चातुर्वर्ण्यस्य चान्तरे[4] ।
वासाय च गृहं कार्यं राजपूज्येषु सर्वदा ॥ ८१ ॥
अन्तरा[5] प्रभवानां च स्वपितुर्न्यूनमिष्यते[6] ।
तथा हस्तशतादर्वागमितं[7] वनवासिनाम् ॥ ८२ ॥
सेनापतेर्नृपस्यापि सप्तत्या सहितैर्हिते[8] ।
चतुर्दशहिते[9] व्यासे शालान्यासः प्रकीर्तितः ॥ ८३ ॥
पञ्चत्रिंशोद्धृते[10] तस्मिन्नलिन्दः समुदाहृतः ।
तथा [11]षड्विंशहस्ता तु सप्ताङ्गुलसमन्विता ॥ ८४ ॥
विप्रस्य महती शाला न दैर्घ्यं परतो भवेत् ।
दशाङ्गुलाधिका तद्वत् क्षत्रियस्य विधीयते ॥ ८५ ॥
पञ्चत्रिंशत्करा वैश्ये अङ्गुलानि त्रयोदश ।
तावत्करैव शूद्रस्य युता पञ्चदशाङ्गुलैः ॥ ८६ ॥
शालायास्तु त्रिभागेन यस्याग्रे वीथिका भवेत् ।
सोष्णीकं नाम तद्वास्तु पश्चाच्छायाश्रयं[12] भवेत् ॥ ८७ ॥

---

१. चतुर्वर्णस्य for चातुर्वर्ण्यस्य इति मु० मत्स्य०. २. द्वात्रिंशतः for द्वात्रिंशद्वै इति मु० मत्स्य०. ३. पादिकम् for भागिकम् इति मु० मत्स्य०. ४. गृहयोरन्तरेण तु for चातुर्वर्ण्यस्य चान्तरे इति मु० मत्स्य०. ५. अन्तरप्र० for अन्तरा प्र० इति मु० मत्स्य०. ६. ०र्गृह० for ०र्न्यून० इति मु० मत्स्य०. ७. ०दर्थं गदितं for ०दर्वागमितं इति मु० मत्स्य०. ८. ०सहितेऽन्विते for सहितैर्हिते इति मु० मत्स्य० ९. ०हृते० for ०हिते इति मु० मत्स्य०. १०. ०त्रिंशान्विते for ०त्रिंशोद्धृते इति मु० मत्स्य०. ११. षट्त्रिंशद्ध० for षड्विंशह० इति मु० मत्स्य०. १२. ०पश्चाद्व्योच्छ्रयं for पश्चाच्छायाश्रयं इति मु० मत्स्य०,

पार्श्वयोर्वीथिका यत्र सावष्टम्भं तदुच्यते ।
समन्ताद्वीथिका यत्र सुस्थितं तदिहोच्यते ॥ ८८ ॥
शुभदं सर्वमेतत्स्याच्चातुर्वर्ण्ये चतुर्विधम् ।
विस्तारात्षोडशो भागस्तथा हस्तचतुष्टयम् ॥ ८९ ॥
प्रथमो भूमिकोच्छ्राय उपरिष्टात्प्रहीयते ।
द्वादशांशेन सर्वासु भूमिकासु तथोच्छ्रयात् ॥ ९० ॥
पक्वेष्टका भवेद्भित्तिः षोडशांशेन[1] विस्तरात् ।
दारवैरपि कल्प्या स्यात्तथा मृन्मयभित्तिका ॥ ९१ ॥
गर्भमानेन मानं तु सर्ववास्तुषु शस्यते ।
गृहव्यासस्य पञ्चाशदष्टादशभिरङ्गुलैः ॥ ९२ ॥
संयुतो द्वारविष्कम्भो द्विगुणश्चोच्छ्रयो भवेत् ।
द्वारशाखासु बाहुल्यमुच्छ्रायकरसम्मितैः ॥ ९३ ॥
अङ्गुलैः सर्ववास्तूनां पृथुत्वं शस्यते बुधैः ।
उदुम्बरोत्तमाङ्गं च [2]तदध्यर्द्धप्रविस्तरात् ॥ ९४ ॥

सेनापतेर्नृपस्यापि सप्तत्येत्यादि । सेनापतेर्नृपस्य गृहे यावान् विस्तार उक्तस्तं करसप्तत्या सहितं कृत्वा तदर्धं गृहीत्वा तस्यार्धस्य चतुर्दशविभागं कृत्वा यावदवशिष्टं भवति तावद्विस्तारां शालां कुर्यादित्यर्थः । तेनाष्टोत्तरहस्तशतविस्तारे राजवेश्मनि पञ्चहस्तप्रमाणा शाला भवति । पञ्चत्रिंशोद्धृत इति । तस्मिन्नेव नवाशीतिविस्तारे राजवेश्मनि पञ्चत्रिंशता भागहारे कृते ये एकोनविंशतिहस्ता अवशिष्यन्ते तावानलिन्दः कर्तव्यः । उदुम्बरो देहली ।

अथातः सम्प्रवक्ष्यामि स्तम्भमानविनिर्णयम् ।
तद्वास्तुभवनोच्छ्रायं[3] सदा सप्तगुणं विदुः[4] ॥ ९५ ॥[5]
अशीत्यंशं[6] पृथुत्वं[7] स्यादग्रे नवगुणैः सह[8] ।
रुचकश्चतुरस्रः[9] स्यादष्टास्रो वज्र उच्यते ॥ ९६ ॥

---

१. पडंशांशेन for षोडशांशेन MS. २. तदार्धार्धे० for तदध्यर्द्ध० इति मु० मत्स्य० ३. कृत्वा स्त० for तद्वास्तु० इति मु० मत्स्य० ४. बुधैः for विदुः इति मु० मत्स्य० ५. Matsyapu 255 1—24. ६ ०त्यंश for ०त्यंशं इति मु० मत्स्य० ७ ०त्वे for ०त्व इति मु० मत्स्य० ८ ०गुणो सति for ०गुणैः सह इति मु० मत्स्य० ९ *०श्चतुरः स्यात्तु अ० for ०श्चतुरस्रः स्याद० इति मु० मत्स्य०.*

द्विवज्रः षोडशास्रस्तु द्वात्रिंशास्रः प्रलीनकः ।
मध्यप्रदेशे यः स्तम्भो वृत्तोवृत्त इति स्मृतः ॥ ९७ ॥
एते पञ्चमहास्तम्भाः प्रशस्ताः सर्ववास्तुषु ।
पद्मवल्लीलताकुम्भपत्रदर्पणभूषिताः[1] ॥ ९८ ॥
स्तम्भस्य नवमांशेन पद्मकुम्भोत्तराणि[2] तु ।
स्तम्भतुल्या तुला प्रोक्ता हीना चोपतुला ततः ॥ ९९ ॥
त्रिभागेनेह सर्वत्र चतुर्भागेन वा पुनः ।
हीनं हीनं चतुर्थांशात्तथा सर्वासु भूमिषु ॥ १०० ॥
[3]सावरोहाणि सर्वेषां प्रवेशो[4] दक्षिणेन तु ।
द्वाराणि तु प्रवक्ष्यामि प्रशस्तानीह यानि तु ॥ १०१ ॥
पूर्वेणेन्द्रं जयन्तं च द्वारं सर्वत्र शस्यते ।
याम्यं च वितथं चैव दक्षिणेन विदुर्बुधाः ॥ १०२ ॥
पश्चिमे पुष्पदन्तं तु वारुणं च प्रशस्यते ।
उत्तरेण तु भल्लाटं सौम्यं तु सुखदं[5] भवेत् ॥ १०३ ॥
तथा वास्तुषु सर्वत्र वेधं द्वारस्य वर्जयेत् ।
द्वारे तु रथ्यया विद्धे भवेत्सर्वकुलक्षयः ॥ १०४ ॥
तरुणा [6]दोषबाहुल्यं शोकः पङ्केन जायते ।
अपस्मारो भवेन्नूनं कूपवेधेन सर्वदा ॥ १०५ ॥
व्यथा प्रस्रवणेन स्यात्कीलेनाग्निभयं भवेत् ।
विनाशो देवताविद्धे स्तम्भेन स्त्रीकृतो भवेत् ॥ १०६ ॥
गृहभर्तुर्विनाशः स्याद् गृहेण च गृहे कृते ।
अमेध्यावस्करैर्विद्धे गृहिणी बन्धकी भवेत् ॥ १०७ ॥
तत्र शस्त्रभयं विन्द्यादन्त्यजस्य गृहेण तु ।
उच्छ्रायाद् द्विगुणां भूमिं त्यक्त्वा वेधो न जायते ॥ १०८ ॥
स्वयमुद्घाटिते द्वार उन्मादो गृहवासिनाम् ।
स्वयं च पिहिते विद्यात्कुलनाशं विचक्षणः ॥ १०९ ॥

---

१. ०रूपिताः for ०भूषिताः इति मु० मत्स्य०. २. ०कुम्भान्तराणि for कुम्भोत्तराणि इति मु० मत्स्य०. ३. वासगेहानि for सावरोहाणि इति मु० मत्स्य०. ४. प्रविशेद्दक्षि० for प्रवेशो दक्षि० इति मु० मत्स्य०. ५. शुभदं for सुखदं इति मु० मत्स्य० ६. दैप० for दोष० इति मु० मत्स्य०.

मानाधिके राजभयं न्यूने तस्करतो भयम् ।
द्वारोपरि च यद् द्वारं तदन्तकभयं[1] स्मृतम् ॥ ११० ॥
आध्मातं[2] मध्यदेशे तु अधिको यस्य विस्तरः ।
यस्य तु सङ्कटं मध्ये सद्यो [3]भर्तृविनाशनम् ॥ १११ ॥
तथान्यपीडितं द्वारं बहुदोषकरं भवेत् ।
मूलद्वारात्तथात्यन्तं[4]नाधिकं शोभया[5] भवेत् ॥ ११२ ॥
कुम्भश्रीपर्णवल्लीभिर्मूलद्वारं तु शोभयेत् ।
पूजयेद्वापि[6] तन्नित्यं बलिना चाक्षतोदकैः ॥ ११३ ॥
भवनस्य वटः पूर्वे दिग्भागे सार्वकामिकः ।
उदुम्बरस्तथा याम्ये वारुणे[7] पिप्पलः शुभः ॥ ११४ ॥
प्लक्षश्चोत्तरतो धन्यो विपरीतास्त्वसिद्धये ।
कण्टकी क्षीरवृक्षश्च आसन्नः[8] सफलद्रुमः[9] ॥ ११५ ॥
भार्याहानिः[10] प्रजाहानिर्भवेतां[11] क्रमशः सदा[12] ।
न छिन्द्याद्यदि तान् [13]वृक्षानन्तरे स्थापयेद्द्रुमान् ॥११६॥
[14]पुन्नागाशोकतिलकशमीबकुलचम्पकान्[15] ।
दाडिमी[16] पिप्पली[17] द्राक्षां[18] तथा कुसुममण्डपान् ॥११७॥
जम्बीरपूगपनसद्रुमकेतकीभि-
र्जातीसरोजशतपत्रिकमल्लिकाभिः ।
यन्नारिकेलकदलीदलपाटलाभि-
र्युक्तं तदत्र भवनं श्रियमातनोति ॥ ११८ ॥

---

१. ०मुखं for ०भयं इति मु० मत्स्य० २. अध्मनो for आध्मातं इति मु० मत्स्य० ३. भर्तुर् for भर्तृ० इति मु० मत्स्य० ४. ०त्तथान्यत्तु for ०त्तथात्यन्तं इति मु० मत्स्य० ५. So Matsyapu; शोभनं MS. ६. ०चापि for ०द्वापि इति मु० मत्स्य० ७ वारुण्यां for वारुणे इति मु० मत्स्य० ८. आसन्नाः for आसन्नः इति मु० मत्स्य० ९. सफलो for सफल० इति मु० मत्स्य० १०. ०हानी for हानि इति मु० मत्स्य० ११ हानी for हानिर् इति मु० मत्स्य० १२. तथा for सदा इति मु० मत्स्य० १३ तानन्यान० for वृक्षान० इति मु० मत्स्य० १४. ०बकुल० for ०तिलक० इति मु० मत्स्य० १५ ०तिलक० for ०बकुल० इति मु० मत्स्य० १६. दाडिमो for दाडिमी इति मु० मत्स्य० १७ पिप्पलो for पिप्पली इति मु० मत्स्य० १८. द्राक्षा for द्राक्षां इति मु० मत्स्य०

रथ्यामार्गः वेधः। अत्राभिमुख्येनावस्थानम्। उच्छ्रायाद् द्विगुणामिति। यावान्द्वारस्योच्छ्रायो दैर्घ्यं तद्द्विगुणाद्वारामभूमेः परतो यद्येते रथ्यादयो भवन्ति तदा न वेधो वास्तुवेध इत्यर्थः।

उदगादिप्लवं वास्तु समानस्य शिरस्तथा[1]।

समानस्य मानसहितस्य वास्तुपुरुषस्य।

परीक्ष्य पूर्ववत्कुर्यात्स्तम्भोच्छ्रायं विचक्षणः॥ ११९॥[2]

न देवधूर्तसचिवचत्वराणां समीपतः।
कारयेद्भवनं प्राज्ञो दुःखशोकसमन्वितम्[3]॥ १२०॥
तस्य [4]प्रवेशाश्चत्वारस्तस्योत्सङ्गाग्रतः[5] शुभाः[6]।
पृष्ठतः पृष्ठतो[7] गन्तुं सङ्गयावर्तं[8] प्रशस्यते॥ १२१॥
अपसव्यो विनाशाय दक्षिणे शीर्षकस्तथा।
सर्वकामफलो नृणां सम्पूर्णो नाम वामतः॥ १२२॥
एवं [9]प्रवेशमालोच्य[10] यत्नेन गृहमारभेत्।
अथ सांवत्सरप्रोक्ते मुहूर्ते शुभलक्षणे॥ १२३॥
रत्नोपरि शिलां कृत्वा सर्वबीजसमन्वितम्।
चतुर्भिर्ब्राह्मणैः स्तम्भं वस्त्रालङ्कारपूजितम्[11]॥ १२४॥
शुक्लाम्बरधरः [12]शिल्पिसहितो वेदपारगैः।
स्नापितं [13]तं न्यसेत्तद्वत्सर्वौषधिसमन्वितम्॥ १२५॥
नानाऽक्षतसमोपेतं [14]वस्त्राभरणसंयुतम्।
ब्रह्मघोषेण वाद्येन गीतमङ्गलनिःस्वनैः॥ १२६॥

---

१. ०समानशिखरं तथा for ०समानस्य शिरस्तथा इति मु० मत्स्य०. २. Matsyapu. 256. 1-35. ३. ०मयं ततः for ०समन्वितम् इति मु० मत्स्य०. ४. प्रदेशा० for प्रवेशा० इति मु० मत्स्य०. ५. ०स्तस्योत्सर्गो ०for ०स्तस्योत्सङ्गा० इति मु० मत्स्य० ६. शुभः for शुभाः इति मु० मत्स्य०. ७. पृष्ठभागन्तु for पृष्ठतो गन्तुम् इति मु० मत्स्य०. ८. सव्यावर्तः for सङ्गयावर्तम् इति मु० मत्स्य०. ९. प्रदेश० for प्रवेश० इति मु० मत्स्य०. १०. ०क्ष्य for ०च्य इति मु० मत्स्य० ११. कारयित्वा सुपूजितम् for ०वस्त्रालङ्कारपूजितम् इति मु० मत्स्य०. १२. शिल्पी for शिल्पि० इति मु० मत्स्य०. १३. विन्यसेत्तद्वत्स० for तं न्यसेत्तद्वत्स० इति मु० मत्स्य०. १४. वस्त्रालङ्कार० for वस्त्राभरण० इति मु० मत्स्य०.

प्रदोषे[1] भोजयेद्विप्रान् होमस्तु[2] मधुसर्पिषा ।
वास्तोष्पते प्रतिजानीहि मन्त्रेणानेन सर्वदा ॥ १२७ ॥
सूत्रपाते तथा कार्यमेवं स्तम्भोच्छ्रये[3] पुनः ।
द्वारवंशोच्छ्रये तद्वत्प्रवेशसमये तथा ॥ १२८ ॥
वास्तूपशमने तद्वद्वास्तुयज्ञस्तु पञ्चधा ।
ईशाने सूत्रपातः स्यादाग्नेये स्तम्भरोपणम् ॥ १२९ ॥
प्रदक्षिणं च कुर्वीत वास्तोः पदविलेखनम् ।
तर्जनी मध्यमा चैव तथाङ्गुष्ठस्तु दक्षिणे ॥ १३० ॥
प्रवालरत्नकनकं[4] फलमष्टाक्षतोदकम्[4] ।
सर्ववास्तुविभागेषु शस्तं पदविलेखनम्[5] ॥ १३१ ॥
न भस्माङ्गारकाष्ठेन न [6]शस्त्रनखचर्मभिः ।
न शृङ्गास्थिकपालैश्च क्वचिद्वास्तु विलेखयेत् ॥ १३२ ॥
एभिर्विलिखितं कुर्याद् दुःखशोकभयादिकम् ।
यदा गृहप्रवेशः स्याच्छिल्पी [7]तत्राभिलक्षयेत् ॥ १३३ ॥
स्तम्भसूत्रादिकं तद्वच्छुभाशुभफलोदयम्[8] ।
आदित्याभिमुखं रौति शकुनिः परुषं यदि ॥ १३४ ॥
तुल्यकालं स्पृशेदङ्गं गृहभर्तुर्यदात्मनः ।
वास्त्वङ्गे तद्विजानीयान्नरः शल्यं भयप्रदम् ॥ १३५ ॥
[9]शकुनानन्तरं यत्र हस्त्यश्वश्वापदं भवेत् ।
तदङ्गसम्भवं विद्यात्तत्र शल्यं विचक्षणः ॥ १३६ ॥
प्रसार्यमाणे सूत्रे तु श्वगोमायुविलिम्पिते[10] ।
तत्तु शल्यं विजानीयात् खरशब्दे च[11] भैरवे ॥ १३७ ॥

---

१. पायसं for प्रदोषे इति मु० मत्स्य० २. होमं तु for होमस्तु इति मु० मत्स्य० ३ ०द्ये for ०च्छ्रये इति मु० मत्स्य० ४. कनकफलं पिष्टा कृतो० for ०कनकं फलमष्टाक्षतो० इति मु० मत्स्य० ५. ०विलेखने for ०विलेखनम् इति मु० मत्स्य० ६. नखशस्त्रेण for न शस्त्रनख० इति मु० मत्स्य० ७ तत्रापि for तत्राभि० इति मु० मत्स्य० ८. ०फलोदयम् for ०फलप्रदम् इति मु० मत्स्य० ९. अङ्कना० for शकुना० इति मु० मत्स्य० १०. श्वा गोमायुर्विलङ्घते for श्वगोमायुविलिम्पिते इति मु० मत्स्य० ११. अति for च इति मु० मत्स्य०

यदि शान्ते तु[1] दिग्भागे मधुरं रौति वायसः ।
धनं तत्र विजानीयाद् भागे वा स्वाम्यधिष्ठिते ॥ १३८ ॥
सूत्रच्छेदे भवेन्मृत्युर्व्याधिः कीले त्वधोमुखे ।
अङ्गारेषु तथोन्मादं कपालेषु च सम्भ्रमम् ॥१३९ ॥
[2]कण्ठशल्येषु जानीयात्पौंश्चल्यं स्त्रीषु शास्त्रवित् ।
[3]गृहभर्तुर्गृहस्यापि विनाशः शिल्पिसम्भ्रमे ॥ १४० ॥
स्तम्भस्कन्धाच्च्युते[4][5] कुम्भे शिरोरोगान्विनिर्दिशेत्[6] ।
कुम्भापहारे सर्वस्य कुलस्यापि क्षयो भवेत् ॥ १४१ ॥
मृत्युः[7] स्थानच्युते स्तम्भे[8] भग्ने बन्धं विदुर्बुधाः ।
करसंख्याविनाशे तु नाशं गृहपतेर्विदुः ॥ १४२ ॥
बीजौषधिविहीने तु भूतिभ्यो[9] भयमादिशेत् ।
प्राग्दक्षिणेन विन्यस्य स्तम्भं[10] छत्रे[11] निवेशयेत् ।
ततः प्रदक्षिणेनान्यान्न्यसेत्स्तम्भान्विचक्षणः ॥ १४३ ॥
यस्माद्भयङ्करा नृणां योजितास्त्वप्रदक्षिणाः[12] ।
रक्षां कुर्वीत यत्नेन स्तम्भोपद्रवनाशिनीम् ॥ १४४ ॥
ततः फलवतीं शालां स्तम्भोपरि निवेशयेत् ।
प्रागुदक्प्रवणां कुर्याद्दिङ्मूढं तु न कारयेत् ॥ १४५ ॥
स्तम्भं वा भवनं वाऽपि द्वारं वासगृहं तथा ।
दिङ्मूढे कुलनाशः स्यान्न च संवर्द्धते[13] गृहम् ॥ १४६ ॥
यदि संवर्धयेद्वेहं सर्वमेव विवर्जयेत्[14] ।
पूर्वेण वर्धितं वास्तु कुर्याद्वैराणि सर्वदा ॥ १४७ ॥
दक्षिणे वर्धितं वास्तु मृत्यवे स्यान्न संशयः ।

---

१. यदीशाने तु for यदि शान्ते तु इति मु० मत्स्य० २. कम्बु० for कण्ठ० इति मु० मत्स्य०, ३. So Matsyapu.; ०कर्तु० MS. ४. स्तम्भे for स्तम्भ इति मु० मत्स्य० ५. ०स्कन्धच्युते for ०स्कन्धाच्च्युते इति मु० मत्स्य० ६. ०रोगं वि० for ०रोगान्वि० इति मु० मत्स्य० ७. मृत्यु for मृत्युः इति मु० मत्स्य० ८. कुम्भे for स्तम्भे इति मु० मत्स्य० ९. भूतेभ्यो for भूतिभ्यो इति मु० मत्स्य० १०. स्तम्भे for स्तम्भ इति मु० मत्स्य० ११. छत्रं for छत्रे इति मु० मत्स्य० १२. ०प्रदक्षिणम् for ०स्त्वप्रदक्षिणाः इति मु० मत्स्य० १३. संवर्द्धयेद् for संवर्द्धते इति मु० मत्स्य० १४. संवर्धयेत् for विवर्जयेत् इति मु० मत्स्य०

पश्चाद्विवृद्धं यद्वास्तु तदर्थक्षयकारकम् ॥ १४८ ॥
वर्धापितं तथा सौम्ये बहुसन्तापकारकम् ।
आग्नेये यत्र वृद्धिः स्यात्तदग्निभयदं भवेत् ॥ १४९ ॥
वर्धितं राक्षसे कोणे [1]वित्तक्षयकरं भवेत् ।
वर्धापितं तु वायव्ये वातव्याधिप्रकोपकृत् ॥ १५० ॥
ईशाने [2]सस्यहानिः स्याद्वास्तौ संवर्धिते सदा ।
ईशाने देवतागारं तथा शान्तिगृहं भवेत् ॥ १५१ ॥
महानसे[3] तथाग्नेये तत्पार्श्वे चोत्तरे जलम् ।
गृहस्योपस्करं सर्वं नैरृते स्थापयेद् बुधः ॥ १५२ ॥
वर्चःस्थानं[4] बहिः कुर्यात्स्नानमण्डपमेव च ।
धनधान्यं च वायव्ये कर्मशालां ततो बहिः ।
एवं वास्तुनिवेशः[5] स्याद् गृहभर्तुः शुभावहः ॥ १५३ ॥
अथातः सम्प्रवक्ष्यामि दार्वाहरणमुत्तमम् ।
धनिष्ठापञ्चकं मुक्त्वा [6]विष्टयादिकमतः परम् ॥ १५४ ॥[7]
ततः सांवत्सरादिष्टे दिने यायाद्वनं[8] बुधः ।
प्रथमं बलिपूजां च कुर्याद्वृक्षाय[9] सर्वथा[10] ॥ १५५ ॥
पूर्वोत्तरेण पतितं, गृहे दारु प्रशस्यते ।
अन्यथा न शुभं [11]विधायाम्यापरनिपातने[12] ॥ १५६ ॥
क्षीरवृक्षोद्भवं दारु न गृहे विनिवेशयेत् ।
कृताधिवासं [13]विहगैरनलानिलपीडितम् ॥ १५७ ॥
गजावभुग्नं[14] च तथा[15]विद्युन्निर्पातपीडितम् ।

---

१. शिशु० for वित्त० इति मु० मत्स्य० २. ईशान्यामग्न० for ईशाने सस्य० इति मु० मत्स्य० ३. महानसं for महानसे इति मु० मत्स्य० ४. मन्धस्थाने for वर्चःस्थानं इति मु० मत्स्य० ५. ०विशेषः for ०निवेशः इति मु० मत्स्य० ६. त्विष्टया० for विष्टया० इति मु० मत्स्य० ७. Matsyapu 257. 1-23. ८. ०व्रजं for ०द्वनं इति मु० मत्स्य० ९ ०द्वृक्षस्य for ०द्वृक्षाय १०. सर्वदा for सर्वथा इति मु० मत्स्य० ११. ०याम्योपरि for ०याम्यापर० १२. ०निपातनम् for ०निपातने इति मु० मत्स्य० १३. ०रनिलानिल० for ०रनलानिल० इति मु० मत्स्य० १४. गजावरुग्णं for गजावभुग्न इति मु० मत्स्य० १५ So Matsyapu.; ०निर्पात०MS.

ऊर्ध्वशुष्कं[1] तथा दारु भग्नं वक्रं[2] तथैव च ॥ १५८ ॥
चैत्यदेवालयोत्पन्नं नदीसङ्गमजं तथा ।
श्मशानकूपनिलयं तडागादिसमुद्भवम् ॥ १५९ ॥
वर्जयेत्सर्वदा दारु यदीच्छेद्विपुलां श्रियम् ।
तथा कण्टकिनो वृक्षान्नीपनिम्बविभीतकान्[3] ॥ १६० ॥
श्लेष्मातकासारतरून्वर्जयेद्[4] गृहकर्मणि ।
असनः[5] शाकमधुकसर्जशालाः[6] शुभावहाः ॥ १६१ ॥
चन्दनं पनसं धन्याः[7] सुरदारुहरिद्रकाः[8] ।
द्वाभ्यामेकेन वा कुर्यात्त्रिभिर्वा भवनं[9] शुभम् ॥ १६२ ॥
बहुभिः कारितं यस्मादनेकभयदं भवेत् ।
एकैव[10] शिंशपा धन्या श्रीपर्णी तिन्दुकी तथा ॥ १६३ ॥
एना[11]नान्यसमायुक्ताः कदाचिच्छुभकारिकाः[12] ।
स्यन्दनः पनसस्तद्वत्सरलार्जुनपद्मकाः ॥ १६४ ॥
एते नान्यसमायुक्ता वास्तुकार्ये [13]शुभप्रदाः ।
तरुच्छेदे तथा[14]पीते गोधां विद्याद्विचक्षणः ॥ १६५ ॥
माञ्जिष्ठवर्णे मेकः स्यान्नीले सर्पं[15]विनिर्दिशेत् ।
अरुणे सरटं विद्यान्मुद्राभे[16] शुकमादिशेत् ॥ १६६ ॥
कपिले मूषिकां[17]विद्यात्खड्गाभे जलमादिशेत् ।
एवंविधं सममं[18] तु वर्जयेद्वास्तुकर्मणि ॥ १६७ ॥
पूर्वच्छिन्नं तु गृह्णीयान्निमित्तशकुनैः शुभैः ।

१. अर्ध० for ऊर्ध्व० इति मु० मत्स्य० २. भग्नशुष्कं for भग्नं वक्रं इति मु० मत्स्य० ३. So Matsyapu.; ०तकान् MS. ४. ०कानाम्र० for ०कासार० इति मु० मत्स्य० ५. आसनाशोक for असनः शाक इति मु० मत्स्य० ६. ०सर्व० for ०सर्ज० इति मु० मत्स्य० ७. धन्यं for धन्याः इति मु० मत्स्य० ८. ०हरिद्रवः for ०हरिद्रकाः इति मु० मत्स्य० ९. भुवनं for भवनम् इति मु० मत्स्य० १०. एकैक for एकैव इति मु० मत्स्य० ११. So Matsyapu.; एते MS. १२. So Matsyapu.; ०दायकाः MS. १३. ०कार्यफलप्रदाः for ०कार्ये शुभप्रदाः इति मु० मत्स्य० १४. महा० for तथा इति मु० मत्स्य० १५. सर्पादि for सर्पं वि इति मु० मत्स्य० १६. मुक्ता० for मुद्रा० इति मु० मत्स्य०. १७. मूषिकान् for मूषिकां इति मु० मत्स्य० १८. सगर्भ or सममं इति मु० मत्स्य०.

अश्मन्तकः=पापायाः । खड्गाभे=श्यामले । व्यासेन गुणिते दैर्घ्ये इति—व्यासेन विस्तारसंख्यया दैर्घ्ये गुणिते आवर्तिते सति यावन्तो हस्ता भवन्ति तेष्वष्टकमष्टकं कृत्वा भागहारे कृते यावदवशिष्यते स आयो भवति, स च ध्वजादिभेदेनाष्टधा भिद्यते । पूर्वाद्याः पूर्वादिदिगष्टकावस्थिता यथा क्रमेण । तमेव पूर्वोक्तव्यासगुणितं दैर्घ्यकरराशिम् । अष्टभिर्भाजिते ऋक्षे=अष्टभिर्भागैर्हृते नक्षत्रस्य करसमूहे ।

बह्वृचगृह्यम्[1]—

अथातो वास्तुपरीक्षा । अनूपरमविवदिष्णु भूम । ओषधिवनस्पतिवत् । यस्मिन् कुशावीरणप्रभूतम्[2] । कण्टकिक्षीरिणस्तु समूलान् परिखायोद्वासयेत् । अपामार्गः शाकस्तिल्वकः परिव्याध इति चैतानि । यत्र सर्वत आपो मध्यं समेत्य प्रदक्षिणं शयनीयं परीत्य प्राच्यः स्यन्देरन्नप्रवदत्यस्तत्सर्वं समृद्धम्[3] । समवस्रवे भक्तशरणं कारयेत् । बह्वन्नं हि[4] भवति । दक्षिणाप्रवणे सभां मापयेत्साऽद्यूताह भवति । युवानस्तस्यां कितवाः कलहिनः प्रमायुका भवन्ति । यत्र सर्वत आपः प्रस्यन्देरन् सा स्वस्त्ययन्यद्यूता च अथैतैर्वास्तु परीक्षेत । जानुमात्रं गर्तं खात्वा तैरेव पांसुभिः प्रतिपूरयेत् । अधिके प्रशस्तं समे वार्तं न्यूने गर्हितम् । अस्तमितेऽपां पूर्णं परिवासयेत् । सोदके प्रशस्तमार्द्रे वार्तं शुष्के गर्हितं श्वेतं मधुरास्वादम् । सिकतोत्तरं ब्राह्मणस्य । लोहितं क्षत्रियस्य । पीतं वैश्यस्य । तत् सहस्रसीतं कृत्वा यथादिक् समचतुरस्रं मापयेत् । आयतं चतुरस्रं वा तच्छमीशाखयोदुम्बरशाखया वा शन्तातीयेन त्रिः प्रदक्षिणं परिव्रजन् प्रोक्षति । अविच्छिन्नया चोदकधारया 'आपो हि ष्ठा मयोभुव'[5] इति तृचेन ।, वंशान्तरेषु शरणानि कारयेत् । गर्तेष्ववका शीपालमित्यवधापयेत् । न ह्यस्य दाहुको[6] भवतीति विज्ञायते । मध्यमस्थूणाया गर्तेऽवधाय प्रागपोदमान् कुशानास्तीर्य व्रीहियवमतीरप आसेचयेत्, अच्युताय भौमाय स्वाहेति । अथैनामुच्छ्रियमाणामनुमन्त्रयेतेहैव तिष्ठ निमिता तिल्वलास्तामिरावती[7] मध्ये पोषस्य तिष्ठन्तीम् । आ त्वा प्रापन्नघायव आ त्वा कुमारस्तरुण आ वत्सो जायतां सह । आ त्वा परिश्रितः कुम्भ आ दध्नः कलशैरयन्निति । वंशमाधीयमानम् । ऋतेन स्थूणामधिरोह वंश द्राघीय आयुः प्रतरं दधान इति ।

---

१. Ās'valāyana gṛhyasūtra, Poona, 1937. 2.·7. 1–12; 8. 1–16; 9. 1–9. २. ०वीरिणं for ०वीरणं इति मु० आश्व० ३.. सर्वसमृद्धम् for सर्वं समृद्धम् इति मु० आश्व० ४. ह for हि इति मु० आश्व० ५. RV. 10. 9. 1 and onwards. ६. So Ās'valāyana; दाहुकं MS. ७. The portion beginning from ०लास्तामिरावती and ending with आ त्वा परि is missing in MS.

सद्र्वासु चतसृषु शिलासु मणिक प्रतिष्ठापयेत्-'पृथिव्या अधि सम्भव' इति । 'अरह्वरो वावदीति त्रेधा बद्धो वरत्रया । इरामु ह प्रशंसत्यनिरामपबाधतामिति' । अथास्मिन् अप आसेचयेत् । ऐतु राजा वरुणो रेवतीभिरस्मिन् स्थाने तिष्ठतु मोदमान । इरां वहन्तो घृतमुक्षमाणा मित्रेण साकं सह सविशन्त्विति ॥ अथैनच्छमयति । व्रीहियव-मतीभिरद्भिर्हिरण्यमवधाय शन्तातीयेन त्रि प्रदक्षिणं परिव्रजन् प्रोक्षति । अविच्छिन्नया चोदकधारया आपो हि ष्ठा मयोभुव इति तृचेन । मध्येऽगारस्य स्थालीपाकं श्रपयित्वा वास्तोष्पते प्रतिजानीह्यस्मानिति चतसृभि प्रत्यृचं हुत्वाऽन्नं संस्कृत्य ब्राह्मणान् भोजयित्वा शिवं वास्तु शिवं वास्त्विति वाचयीत ॥

अविवदिष्णु=यत्र विवदिष्णुर्विवदिता न विद्यते तत् । अविवादीति पाठे विवाद-रहितमित्यर्थ । भूमौ पवित्रनररनिबद्धं बहुतरोपवित्रनस्पत्युत्पत्तियोग्यम् । परिसाय = उत्पाट्य । परिव्यायो राजवृत्तविशेष. । प्रपतन्त्य = प्रकर्षेण गच्छन्त्य[1] । सर्वस-मृद्धम्=सर्व. पुत्रादिभि सम्पूर्णम् । समवस्त्रे प्रणालिकादेशे । भक्तशरणम् = पाकशाला । सभा गृहस्थस्य समाजशाला सा यदि दक्षिणापरस्यां देशे क्रियते तदा द्यूतवती भवत्यतो न तथा कार्येत्यर्थ । प्रमायुका मरणशीला । वर्त=नात्युत्कृष्ट नापकृष्ट-मित्यर्थ । सहस्रमीतम् अपरिमितद्रव्यम् । शन्तातीयेन शन्न इन्द्राग्नी भवतामिति सूक्तेन । अवका=शम्बुका. । शीपाला शैवाला इति वास्तुशान्ति ॥

## अथ राष्ट्रम् ( ७ )

तत्र मनुः[2]—

राष्ट्रस्य सग्रहे नित्य विधानमिदमाचरेत् ।
सुसगृहीतराष्ट्रो हि पार्थिव सुखमेधते ॥ १ ॥
द्वयोस्त्रयाणा पञ्चाना मध्ये गुल्ममवस्थितम्[3] ।
तथा ग्रामशताना च कुर्याद्राष्ट्रस्य गुप्तये[4] ॥ २ ॥
ग्रामस्याधिपतिं कुर्याद्दश ग्रामाधिप[5] तथा ।
विंशतीश[6] शतेश च सहस्रपतिमेव च ॥ ३ ॥

द्वयोर्ग्रामयोरित्यन्वय । गुल्म =पदातिसमूह. ।

---

१ For प्रपतन्त्य प्रकर्षेण गच्छन्त्य RP (p 236) reads अवरस्य अशब्दवत्य । छान्दसा नुमभाव. २ 7. 113-115 ३ ०मधिष्ठितम् for ०मवस्थितम् इति मु० म० ४. सग्रहं for गुप्तये इति मु० म० ५. ग्रामदशेशम् for ग्रामाधिपम् इति मु० म० ६ So Manu, ०विंशतीशं MS.

आपस्तम्बः—ग्रामेषु नगरेषु चार्यान् शुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् । तेषां पुरुषास्तथागुणा एव स्युः । सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम्, क्रोशो ग्रामेभ्यः[1] ॥

मनुः[2]—

तेषां ग्राम्याणि कार्याणि पृथक्कार्याणि चैव हि ।
राज्ञो यः[3] सचिवः स्निग्धस्तानि पश्येदतन्द्रितः ॥ ४ ॥
नगरे नगरे चैव[4] कुर्यात्सर्वार्थचिन्तकम् ।
उच्चैःस्थानं घोररूपं नक्षत्राणामिव ग्रहम् ॥ ५ ॥
स तानु परिक्रामेत्सर्वानायुक्तकान्[5] स्वयम् ।
तेषां वृत्तं[6] परिणयेत्सम्यग्राष्ट्रेषु तच्चरैः ॥ ६ ॥
ग्रामदोषान् समुत्पन्नान् ग्रामिकः शनकैः स्वयम् ।
शंसेद् ग्रामदशेशाय दशेशो विंशतीशिने[7] ॥ ७ ॥
विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत् ।
शंसेद् ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥ ८ ॥
एवं सर्वं विधायेदमितिकर्तव्यमात्मनः ।
युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥ ९ ॥
यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः ।
अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात् ॥ १० ॥
दशी कुलं तु भुञ्जीत विंशी पञ्च कुलानि च ।
ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम् ॥ ११ ॥

अनुपरिक्रामेत् यदाऽन्यायिभिस्ते नियुक्ता अभिभूयन्ते तदा तान् [8]स्वबले पूरयेदित्यर्थः । परिणयेत्, सोऽप्यशक्तो देशाध्यक्षाय । देशाध्यक्षोऽपि सर्वात्मना दोषमुच्छिन्द्यात् ।

शंखलिखितौ[9]—

---

१. ग्रामः for ग्रामेभ्यः ( Cf RP. ). २. 7. 120–122, 116, 117, 142, 118, 119. ३. ऽन्यः for यः इति मु० म०. ४. चैकं for चैव इति मु० म०. ५. सर्वानेव सदा for सर्वानायुक्तकान् इति मु० म०. ६. So Manu; वृत्ते MS. ७. So Manu.; विंशतीशिते MS. ८. स्वबलेन is suggested for स्वबले. ९. P. 39.

वाहनयोधानां सततमन्त्रीक्षणम्। प्रतिमासं द्विसौवर्णिकी वृत्तिः । षाण्मास्यं स्मरणं चातुर्मास्यं वा। स्वर्यातेषु दानमनुक्रोशः। विदितेष्वनुप्रदानं कुलचारित्रशीलविद्यालक्षणगुणाधिकेषु सम्मानं प्रयुञ्जीत ॥

स्वर्यातेषु दानमित्यादिराजकार्येण मृतेषु योधेषु तत्पुत्रादिभ्यो दानं दया च राज्ञा विधातव्ये। प्रसिद्धेषु तु योधेषु दानवेतनादधिकमपि वस्त्रादि देयमित्यर्थः॥

मनुः[1]—

राजा कर्मसु युक्तानां स्त्रीणां प्रेष्यजनस्य च।
प्रत्यहं कल्पयेद् वृत्तिं स्थानं कर्मानुरूपतः॥ १२॥
पणो देयोऽवकृष्टस्य षट् तूत्कृष्टस्य भक्तकम्[2]।
षाण्मासिकस्तथा छादो धान्यद्रोणस्तु मासिकः॥ १३॥

षट् पणा इत्यन्वयः। छाद आच्छादनवस्त्रम्।

बृहस्पतिः—

गुणवानिति यः प्रोक्तः ख्यापितो जनसंसदि।
कथं तेनैव वक्त्रेण निर्गुणः परिकथ्यते॥ १४॥
तस्मात्प्रभुत्वं वृत्तिं च निर्दोषस्य न चालयेत्।
अनवस्थाप्रसङ्गः स्यान्नश्येतोपग्रहस्तथा॥ १५॥

उपग्रहः=परिग्रहः।

सम्यक् निविष्टदेशस्तु कृतदुर्गस्तु शास्त्रतः।
कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम्॥ १६॥
यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति।
तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः॥ १७॥
राष्ट्रेषु रक्षाधिकृताः परस्वादायिनः शठाः।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः॥ १८॥

निर्दाता=लविता। कक्षम्=तृणम्।

याज्ञवल्क्यः[3] —

चाटतस्करदुर्वृत्तमहासाहसिकादिभिः।
पीड्यमानाः प्रजा रक्षेत्कायस्थैभ्यो[4] विशेषतः॥ १९॥

---

१. 7. 125, 126 २. षडुत्कृष्टस्य वेतनम् for षट् तूत्कृष्टस्य भक्तकम् इति मु० म०. ३. I 336. ४. ०ल्कायस्थैश्च for त्कायस्थेभ्यो इति मु० या०.

मनु:[1]—

मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ।
सोऽचिराद् भ्रश्यते स्वाम्याज्जीविताच्च सबान्धवः ॥ २० ॥
शरीरकर्षणात्प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात् ॥ २१ ॥

कात्यायनः—

श्रोत्रिया विधवा बाला दुर्बलाश्च कुटुम्बिनः ।
एते राजबला राज्ञा रक्षितव्याः प्रयत्नतः ॥ २२ ॥
अनाथस्य नृपो नाथस्त्वगृहस्य नृपो गृहम् ।
अपुत्रस्य नृपः पुत्रो ह्यपितुः पार्थिवः पिता ॥ २३ ॥
यत्र कर्माणि नृपतिः स्वयं पश्यति धर्मतः ।
तत्र साधुसमाचारा निवसेयुः सुखं प्रजाः ॥ २४ ॥

मनुः[2] —

ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥ २५ ॥

ब्राह्मं संस्कारं ब्राह्मणेन क्रियमाणमभिषेकमित्यर्थः ।

कात्यायनः—

प्रजानां रक्षणं नित्यं कण्टकानां च शोधनम् ।
द्विजानां पूजनं चैव एतदर्थं कृतो नृपः ॥ २६ ॥

बृहस्पतिः—

तत्प्रजापालनं प्रोक्तं विविधं न्यायवेदिभिः ।
परचक्रचौरभयाद् बलिनोऽन्यायवर्तिनः ॥ २७ ॥
परानीकस्तेन भयमुपायैः शमयेन्नृप ।
बलवत्परिभूतानां प्रत्यहं न्यायदर्शनैः ॥ २८ ॥
रक्षन् धर्मेण भूतानि राजवध्यांश्च घातयन् ।
यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥ २९ ॥
यदधीते यद्यजते यज्जुहोति यदर्चति ।
तस्य षड्भागभाग् राजा सम्यग्भवति रक्षणात् ॥ ३० ॥

---

१. 7. 111, 112. २. 7. 2.

शख —

न व्रतैर्नोपवासेन नच यज्ञै पृथग्विधै ।
राजा स्वर्गमवाप्नोति प्राप्नोति परिपालनात् ॥ ३१ ॥

यम —

वानप्रस्था परिव्राज श्रोत्रियाश्चाहिताग्नय ।
षड्भागस्य प्रदातारो नैते राज्ञो हिरण्यदा ॥ ३२ ॥

षड्भागस्य—पुण्यषड्भागस्य ।

मनु [१]—

सर्वतो धर्मषड्भागो राज्ञो भवति रक्षणात्[२] ।
अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षत ॥ ३३ ॥
योऽरक्षन्बलिमादत्ते कर शुल्क च पार्थिव ।
प्रतिभोग च दण्ड च स सद्यो नरक व्रजेत् ॥ ३४ ॥
अरक्षितार राजान बलिषड्भागहारिणम् ।
तमाहु सर्वलोकस्य समग्रमलहारकम् ॥ ३५ ॥
अनवेक्षितमर्याद[३] नास्तिक विप्रलोपकम्[४] ।
अरक्षितारमत्तार नृप विद्यादधोगतिम् ॥ ३६ ॥
यो हत्वा गोसहस्राणि नृपो दद्यादरक्षिता ।
स शब्दमात्रफलभाग्राजा भवति तस्कर ॥ ३७ ॥[५]

विप्रलोपकं विच्छेदक वृत्त्यादीनामिति शेष । अत्तारम्=भोक्तारम् ।

इति राष्ट्रम् ॥

अथ कोशः ( ८ )

तत्र महाभारते[६]—

अधन दुर्बल प्राहुर्धनेन बलवान् भवेत् ।
सर्वं बलवत पथ्य[७] सर्वं तरति कोशवान् ॥ १ ॥

---

१ 7 304,307-309 २ रक्षन for रक्षणात् इति मु० म० ३ अनपेक्षित० for अनवेक्षित० इति मु० म० ४ ०लुम्पकम् for ०चोरकम् इति मु० म० ५ This verse is not found in Manu ६ Santiparva 130 49, 8 17, 8 23, 8 20 8 16, 115 20 82 2 c d, 3 a b ७ धनवत्ता प्राप्य for बलवत पथ्यम् इति मु० महा०

अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप !
प्राणयात्रा च[1] लोकस्य विनार्थेन[2] न सिद्ध्यति ॥ २ ॥
नाधनो धर्मकार्याणि[3] यथावदनुतिष्ठति ।
धनाद्धि धर्मः स्रवति शैलादिव महत्सरः[4] ॥ ३ ॥
अधनेनार्थकामेन चेतु[5] धर्मो न शक्यते[5] ।
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ॥ ४ ॥
अर्थेभ्यो हि प्रवृद्धेभ्यः[6] सम्भृतेभ्य इतस्ततः[7] ।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ ५ ॥
कोशाख्यपटलं[8] यस्य कोशवृद्धिकरैर्नरैः ।
पात्रभूतैश्च[9] सततं धार्यते[9] स नृपोत्तमः ॥ ६ ॥
यो राजकोशं नश्यन्तमाचक्षीत नराधिपे[10] ।
श्रोतव्यं तस्य[11] च रहो रक्षयश्चामात्यतो भवेत् ॥ ७ ॥

चेतुम्=संचेतुम् ।

मनुः[12]—

क्रयविक्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगक्षेमं च सम्प्रेक्ष्य वणिजो दापयेत्करान् ॥ ८ ॥
यथाफलेन युज्येत राजा कर्ता च कर्मणाम् ।
तथा वीक्ष्य[13] नृपो राष्ट्रे कल्पयेत्सततं करान् ॥ ९ ॥
यथाल्पाल्पमदन्त्याद्यं वार्योकोवत्सषट्पदाः ।
तथाल्पाल्पो[14] गृहीतव्यो राष्ट्राद्राज्ञाब्दिकः करः ॥ १० ॥
पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः ।
धान्यानामष्टमो भागः षष्ठो द्वादश एव वा ॥ ११ ॥

---

१. ऽपि for च इति मु० महा० २. विना ह्यर्थं for विनार्थेन इति मु० महा० ३ ०कृत्यानि for ०कार्याणि इति मु० महा० ४. शैलादभि नदी यथा for शैलादिव महत्सरः इति मु० महा० ५. नार्थः शक्यो विधित्सितुम् for चेतुं धर्मो न शक्यते इति मु० महा० ६. विवृद्धेभ्यः for प्रवृद्धेभ्यः इति मु० महा० ७. ०भ्यस्ततस्ततः for भ्य इतस्ततः इति मु० महा० ८. कोशाख्य० for कोशाख्य० इति मु० महा० ९. आप्तैश्चगुप्तैश्च सततं चीयते for पात्रभूतैश्च सततं धार्यते इति मु० महा० १०. युधिष्ठिर for नराधिप इति मु० महा० ११. ०तव्यमस्य for ०तव्यं तस्य इति मु० महा० १२. 7. 127-132; 10. 118-120. १३. ऽवेक्ष्य for वीक्ष्य इति मु० म० १४. So Manu.; कल्पो MS.

आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम् ।
गन्धौषधीरसानाञ्च पुष्पमूलफलस्य च ॥ १२ ॥
पत्रशाकतृणानां च चर्मणां वैणवस्य[1] च ।
मृन्मयानां च भाण्डानां सर्वस्याश्ममयस्य च ॥ १३ ॥
चतुर्थमाददानो हि[2] क्षत्रियो भागमापदि ।
प्रजा रक्षन् परं शक्त्या किल्बिषात्प्रतिमुच्यते ॥ १४ ॥
स्वधर्मो विजयेत्तस्य[3]न भये[4]स्यात्पराङ्मुखः ।
शस्त्रेण वैश्यान् रक्षित्वा धर्म्यमाहारयेद् बलिम् ॥ १५ ॥
धान्येऽष्टमं विंशं शुल्कं विंशं कार्षापणावरम् ।
कर्मोपकरणाः[5] शूद्राः कारवः शिल्पिनस्तथा ॥ १६ ॥

अदन्ति=भक्षयन्ति । आद्यम्=भक्षणीयम् । वार्यौकसः=जलौकसः । द्रुशब्देन वृक्ष उच्यते । आपदि=कोशशून्यत्वे ॥

बृहस्पतिः—

दशाष्टषष्ठं नृपतेर्भागं दद्यात्कृषीवलः ।
खिलाद्वर्षावसन्ताच्च कृष्यमाणाद्यथाक्रमम् ॥ १७ ॥
देशस्थित्या बलिं दद्युर्भूतं षण्मासवार्षिकम् ।
एष धर्मः समाख्यातः कीनाशानां पुरातनः ॥ १८ ॥

भूतम्=यथावस्थितम् । कीनाशः=कृषीवलः ।

विष्णुः—

प्रजाभ्यो बलार्थे[6] धान्यतः[7] षष्ठमंशमाहराः स्युः । तदुपजीविनो वा दद्युः प्रतिमासम् ।

वनदाहः = दग्धं वनम् । तदुपजीविनस्तानेव य उपजीवन्ति । सैव तेषां वृत्तिः ।

गौतमः[8]—

शिल्पिनो मासि मास्येकैकं कर्म कुर्युः । एतेनात्मोपजीविनो व्याख्याताः ।

---

१. वैदलस्य for वैणवस्य इति मु० म० २ ऽपि for हि इति मु० म०.
३ विभयस्तस्य for विजयेत्तस्य इति मु० म० ४. नाहवे for न भये इति मु० म०
५. So Manu; धर्मो० for कर्मो० MS ६. धन्यर्थम् for बलार्थे RP. 262.
७. RP. adds संवत्सरेण before धान्यतः ८ 2. I. 10. 31-34

नौचक्रीवन्तश्च । भक्तं तेभ्योऽपि[1] दद्यात् ।

शिल्पिन:=लोहकारादय: । मासस्यैकमहरात्मानुरूपं राज्ञ: कर्म कुर्युर्नान्यत्ते-भ्यो ग्राह्यम् । आत्मोपजीविन:=भारवाहनटनर्तकादय: । नौचक्रीवन्त:=नौशकट-व्यवहारिण: ।

मनु:[2]—

नोच्छिन्द्यादात्मनो मूलं परेषां चातितृष्णया ।
उच्छिन्दन्नात्मनो[3] मूलमात्मानं तांश्च नाशयेत्[4] ॥ १६ ॥

करशुल्कादेरग्रहणमात्ममूलच्छेद: । यथोचितादधिकग्रहणं परमूलच्छेद: ।

याज्ञवल्क्य:[5]

अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिवर्धयेत् ।
सोऽचिराद्विगतश्रीको नाशमेति सबान्धव: ॥ २० ॥
प्रजापीडनसन्तापात्समुद्भूतो हुताशन: ।
राज्ञ: कुलं श्रियं प्राणान्नादग्ध्वा[6] विनिवर्तते ॥ २१ ॥

कात्यायन:—

अन्यायेन हि यो राष्ट्रात्करदण्डं च पार्थिव: ।
सस्यभागं च शुल्कं चाप्याददीत स पापभाक् ॥ २२ ॥

मनु:—[7]

अनादेयं नाददीत परिक्षीणोऽपि पार्थिव: ।
न चादेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत् ॥ २३ ॥
अनादेयस्य चादानादादेयस्य च वर्जनात् ।
दौर्बल्यं ख्याप्यते राज्ञ: स प्रेत्येह [8]विनश्यति ॥ २४ ॥
स्वादानाद्वर्णसंसर्गाद्[9] दुर्बलानां च रक्षणात् ।
बलं सञ्जायते राज्ञ: स प्रेत्येह च वर्धते ॥ २५ ॥

वर्णसंसर्गादिति । वर्णानां ब्राह्मणादीनाम् । वर्णैरेव समानजातीयैर्विवाहादि-सम्बन्धाचेन वर्णसङ्करो न जायत इत्यर्थ: ।

---

१. अपि is missing in the pub. edit. of Gautamadharma. २. 7. 139. ३. ०न्दन्ह्या० for ०न्दन्ना० इति मु० म०. ४. पीडयेन् for नाशयेत् इति मु० म०. ५. 1. 13; 340, 341. ६. ०प्राणांश्चादग्ध्वा न for प्राणान्ना-दग्ध्वा इति मु० याज्ञ०. ७. ८. १७०, १७१, १७२. ८. च for वि० इति मु० म०. ९. ०रक्षण० for ०द्दुर्ब० इति मु० म०.

कात्यायन —

एवं प्रवर्तते यस्तु लोभं त्यक्त्वा नराधिप ।
तस्य पुत्राः प्रजायन्ते राष्ट्रं कोशश्च वर्धते ॥ २६ ॥

महाभारते—

धर्मार्जितो महान् कोशो यस्य स्यात्पृथिवीपते ।
सोऽत्यल्पपरिवारोऽपि पृथिवीमधितिष्ठति ॥ २७ ॥

अथ दण्डः ( ९ )

तत्र महाभारते[1]—

प्रकाशश्चाप्रकाशश्च दण्डोऽत्र[2] परिकल्पित[3] ।
प्रकाशोऽष्टविधस्तत्र गुह्यश्च बलवत्तर[4] ॥ १ ॥
रथा नागा हयाश्चैव पादाताश्चैव भारत[5] ।
विष्टिर्विश्वराश्चैव[6] दैशिका[7] इति चाष्टमम्[8] ॥ २ ॥
अनुरक्तेन हृष्टेन पुष्टेन च महीपते ।
स्वल्पेनापि हि सैन्येन महीं जयति पार्थिव ॥ ३ ॥

विष्टिर्बलात्कारेणाकृष्ट कर्मकर । दैशिका देशे भवा पुरुषा ।

अथ मित्रम् ( १० )

तत्र मनु[9]—

हिरण्यभूमिसम्प्राप्त्या पार्थिवो न तथैधते ।
यथा मित्रं ध्रुवं लब्ध्वा कृशमप्यायतिक्षमम् ॥ १ ॥
धर्मज्ञं च कृतज्ञं च तुष्टप्रकृतिमेव च ।
अनुरक्तं स्थिरारम्भं लघुमित्रं प्रशस्यते ॥ २ ॥

याज्ञवल्क्य[10]—

हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यत ।
अतो यतेत तत्प्राप्त्यै रक्षेत्सत्यं समाहित ॥ ३ ॥

---

१ Santip 59 40, 41 २ ०य for ०त्र इति मु० महा० ३ परिशङ्कित for परिकल्पित इति मु० महा० ४ यदुविन्तर for बलवत्तर इति मु० महा० ५ पाण्डव for भारत इति मु० महा० ६ So Mahā, ०र्नाविचारा० MS ७ दे० for दै० इति मु० महा० ८ So Mahā, ०श्चाष्टम इति मु० महा० ९ 7 208, 209 १० 1 352

मत्स्यपुराणे[1]

पितृपैतामहं मित्रं सामन्ताश्च[2] तथा रिपोः।
कृत्रिमं च महाभाग ! त्रिविधं[3]मित्रमुच्यते ॥ ४ ॥

महाभारते[4]—

वेदितव्यानि मित्राणि बोधव्याश्चापि[5] शत्रवः।
एतत्सुसूक्ष्मं लोकेऽस्मिन् दृश्यते प्राज्ञसम्मतम् ॥ ५ ॥
यो यस्मिन् [6]जीवितस्यार्थे [7]पश्यन् पीडां न जीवति।
स तस्य तावन्मित्रं [8]स्याद्यावन्न स्याद्विपर्ययः ॥ ६ ॥
नास्ति मैत्री स्थिरा नाम नच ध्रुवमसौहृदम्।
अर्थयुक्त्याभिजायन्ते[9] मित्राणि रिपवस्तथा ॥ ७ ॥
मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्यये।
शत्रुश्च मित्रतामेति स्वार्थस्तु[10] बलवत्तरः ॥ ८ ॥

व्यासः[11]—

न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः[12]।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ ९ ॥

याज्ञवल्क्यः[13]—

स्वाम्यमात्यजना[14] दुर्गं कोशो दण्डस्तथैव च।
मित्राण्येताः प्रकृतयः सप्ताङ्गं[15] राज्यमुच्यते ॥ १० ॥

मनुः[16]—

स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा।

---

१. 220. 17 c-d, 220. 18 a-b २. अमित्रं च for सामन्ताश्च इति मु० महा०. ३ मित्रं त्रिविध० for त्रिविधं मित्र इति मु० मत्स्य०. ४. S'āntip. 138 37, 40, 42. ५. विज्ञेया for बोधव्या इति मु० महा०. ६. जीविति स्वार्थे for जीवितस्यार्थे इति मु० महा० ७ पश्येन् for पश्यन् इति मु० महा०. ८. मित्रं तावत्स्या for तावन्मित्रं स्या० इति मु० महा०. ९. ०नु० for ०भि० इति मु० महा० १०. स्वार्थो हि for स्वार्थस्तु इति मु० महा०. ११. Mahā. S'āntiparva 138. 10 a-b, 39 c-d. १२. ०त्सुहृत् for ०द्रिपुः इति मु० महा० १२. 1. 353. १४ ०मात्या जनो for ०मात्यजना इति मु० याज्ञ०. १५. राज्यं सप्ताङ्ग० for सप्ताङ्गं राज्य० इति मु० याज्ञ०. १६. 1. 294—297.

सप्त प्रकृतयो ह्येनाः समस्ता [1]राष्ट्रमुच्यते ॥ ११ ॥
सप्तानां प्रकृतीनां तु राज्यस्यासां यथाक्रमात्[2] ।
पूर्वं पूर्वं गुरुतरं जानीयाद् व्यसनं नृप.[3] ॥ १२ ॥
सप्ताङ्गस्यास्य[4] राज्यस्य त्रिष्टब्धस्य त्रिदण्डवत् ।
अन्योन्यगुणवैशेष्यान्न किञ्चिदतिरिच्यते ॥ १३ ॥
तेषु तेषु हि कृत्येषु तत्तदङ्गं विशिष्यते ।
येन तत्स्थाप्यते[5] कार्यं तत्तस्मिन् श्रेष्ठमुच्यते ॥ १४ ॥

व्यसनम् = व्यसनकारणम्, भवेदिति शेषः ।

## अथ राजपुत्ररक्षा ( ११ )

मत्स्यपुराणे[6]—

राजपुत्रस्य[7] रक्षा च कर्तव्या पृथिवीक्षिता ।
आचार्यश्चापि[8]कर्तव्यो नित्ययुक्तैश्च[9]रक्षिभिः ॥ १ ॥
धर्मकामार्थसूत्राणि[10] धनुर्वेदं च शिक्षयेत् ।
रथे च कुञ्जरे चैनं व्यायामं कारयेत्सदा ॥ २ ॥
शिल्पानि शिक्षयेच्चैनं[11]नाप्तैर्मिथ्याप्रियं वदेत् ।
शरीररक्षाव्याजेन रक्षिणोऽस्य नियोजयेत् ॥ ३ ॥
न चास्य सङ्गो दातव्यः क्रुद्धलुब्धावमानितैः[12]।
तथा च विनयेदेनं यथा यौवनगोमुखे[13] ॥ ४ ॥
इन्द्रियैर्नापकृष्येत सतां मार्गात्सुदुर्गमात् ।
गुणाधानमशक्यं तु यस्य कर्तुं[14] स्वभावतः ॥ ५ ॥
बन्धनं तस्य कर्तव्यं गुप्तदेशे सुखान्वितम् ।
अविनीतकुमारं हि कुलमाशु विशीर्यते ॥ ६ ॥

---

१. सप्ताङ्गं राज्य० for समस्ता राष्ट्र० इति मु० म० २. यथाक्रमम् for यथाक्रमात् इति मु० म० ३. महत् for नृप इति मु० म० ४. ०स्येह for ०स्यास्य इति मु० म० ५. यत्साध्यते for तत्स्थाप्यते इति मु० म० ६. 220. 1-7. ७. राजन्पु० for राजपु० इति मु० मत्स्य० ८ आचार्यश्च त्र for आचार्यश्चापि इति मु० मत्स्य० ९. ०युक्तश्च for ०युक्तैश्च इति मु० मत्स्य० १०. ०शास्त्राणि for ०सूत्राणि इति मु० मत्स्य० ११. ०च्चैनं नाप्तै० for ०च्चैनमाप्तै० इति मु० मत्स्य० १२. So Matsyapu. लुब्धा० for क्रुद्ध० MS. १३. ०चरे for ०मुखे इति मु० मत्स्य० १४. So Matsyapu , कर्तुः for कर्तुम् MS.

अधिकारेषु सर्वेषु विनीतं विनियोजयेत् ।
आदौ स्वल्पे ततः पश्चात्क्रमेण च[1] महत्स्वपि ॥ ७ ॥

यौवनगः = यौवनप्राप्तः । मुखे = आदौ ।

महाभारते—

नैव स्वैररिभिर्वापि प्रस्यते पुत्रवान् नृपः ।
तस्माद्राजा सदा पुत्रं संरक्षेच्छिक्षयीत च ॥ ८ ॥
अमात्यैरात्मसदृशैः राजपुत्रस्य रक्षणम् ।
चारैश्च विविधोपायैः प्रविधेयं पृथग्विधैः ॥ ९ ॥

स्वकीयैः [सामन्तादिभी रक्षणं प्रविधेयमित्यन्वयः ।

इति राजपुत्ररक्षा ।

## अथ मन्त्रः ( १२ )

तत्र मनुः[2]—

उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।
हुत्वाग्निं[3] ब्राह्मणांश्चार्च्य प्रविशेत्स शुभां सभाम् ॥ १ ॥
तत्र स्थिताः[4] प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ।

श्रीरामायणे —

त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ॥ २ ॥
तेषां तु समवेतानां गुणदोषान्वदाम्यहम् ।
मन्त्रिभिर्मन्त्रसंयुक्तैः[6] समर्थैर्मन्त्रनिश्चये[7] ।
मित्रैर्वापि समानार्थैर्बान्धवैश्चातिवाहितैः[8] ॥ ३ ॥
मन्त्रिभिर्मन्त्रयित्वा यः कर्मारम्भे प्रवर्तते[9] ।
तत्रैव[10] कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥ ४ ॥
एकोऽर्थं विमृशत्येको[11] धर्मे प्रकुरुते मतिम्[12] ।
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ॥ ५ ॥

---

१. ०त्क्रमेणाथ for ०त्क्रमेण च इति मु० मत्स्य० २. 7. 145, 146 a-b. ३. हुताग्निर् for हुत्वाग्निं इति मु० म० ४. स्थितः for स्थिताः इति मु० म० ५. Yuddhakāṇḍa 6.6 c d, 7-15a-b. ६. मन्त्रस्त्रिभिर्हि संयुक्तः for मन्त्रिभिर्मन्त्रसंयुक्तैः इति मु० रा०. ७. ०निर्णये for ०निश्चये इति मु० रा० ८. ०रपि प्राधिकैः for ०श्चातिवाहितैः इति मु० रा० ९. For this line the pub. edition of the Matsyapu. reads महितो मन्त्रयित्वा यः कर्मारम्भान प्रवर्तयेत् १०. दैवे च for तत्रैव इति मु० रा० ११. ०देको for ०त्येको इति मु० रा० १२. मनः for मतिम् इति मु०रा०

गुणदोषावनिश्चित्य त्यक्तधर्मव्यपाश्रय[1] ।
करिष्यामीत्युपेक्षेत[2] य कार्य स[2] नराधम ॥ ६ ॥
यथैव[3] पुरुषा नित्यमुत्तमाधममध्यमा ।
एव मन्त्रोऽपि[4] विज्ञेय[4] उत्तमाधममध्यम[5] ॥ ७ ॥
ऐकमत्यमुपागत्य शास्त्रदृष्टेन चक्षुषा ।
मन्त्रिणा यत्र नियमस्तमाहुर्मन्त्रमुत्तमम्[6] ॥ ८ ॥
बह्व्यस्तु[7] मतयो भूत्वा मन्त्रिणामर्थसिद्धये ।
पुनर्मन्त्रैकतां[8] यान्ति[10] स मन्त्रो मध्यम स्मृत ॥ ६ ॥
अन्योऽन्य मतिमास्थाय यत्र सम्प्रतिपद्यते[11] ।
न चैकमत्ये श्रेयोऽस्ति[12] स मन्त्रोऽधम[13] उच्यते ॥ १० ॥
अर्थानर्थौ च यत्रोभौ सशयश्च परीक्ष्यते ।
स मन्त्र इति विज्ञेय शेषस्तु खलु विक्रम ॥ ११ ॥[14]

समानार्थैं = समानप्रयोजनै ।

[15]मनु —

गिरिपृष्ठ समारुह्य प्रासाद वा रहोगत ।
अरण्ये निश्शलाके वा मन्त्रयेदविभावित ॥ १२ ॥
यस्य मन्त्र न जानन्ति समागम्य पृथग्जना ।
सहस्रा पृथिवीं भुङ्क्ते कोशहीनोऽपि पार्थिव ॥ १३ ॥

निश्शलाके = निर्जने ।

[16]याज्ञवल्क्य —

मन्त्रमूल यतो राज्यमतो[17] मन्त्र सुरक्षितम् ।
कुर्याद्यथास्य न विदु कर्मणामाफलोदयात् ॥ १४ ॥

---

१ त्यक्त्वा धर्मव्यपाश्रयम् for त्यक्तधर्मव्यपाश्रय इति मु० रा० २ ०ति य कार्यमुपेक्षेत्स for ०त्युपेक्षेत य कार्य स इति मु० रा० ३ यथेमे for यथैव इति मु० रा० ४ मन्त्रा हि विज्ञेया for मन्त्रोऽपि विज्ञेय इति मु० रा० ५ ०मध्यमा for मध्यम इति मु० रा० ६ ०णो यत्र निरता for ०णा यत्र नियम० इति मु० रा० ७ बह्वयोऽपि for बह्व्यस्तु इति मु० रा० ८ ०निर्णये for ०सिद्धये इति मु० रा० ६ ०र्थैक्य० for ०मैन्त्रै० इति मु० रा १० प्राप्ता for यान्ति इति मु० रा० ११ ०भाष्यन for ०पद्यते इति मु० रा० १२ श्रेयो० for श्रेयो० इति मु० रा० १३ मन्त्र सो० for स मन्त्रो० इति मु० रा० १४ नास्ति मुद्रितरामायणे १५ 7 147, 148 १६ I, 344 १७ राज्य तस्मान्मन्त्र for राज्यमतो मन्त्र इति मु० याज्ञ०

मनु[1]: —

जडमूकान्धबधिरांस्तैर्यग्योनान्वयोतिगान् ।
स्त्रीम्लेच्छव्याधितव्यङ्गान्मन्त्रकाले प्रसेधयेत्[2] ॥ १५ ॥
भिन्दन्त्यवमता मन्त्रं तैर्यग्योनास्तथैव च ।
स्त्रियश्चैव विशेषेण तस्मात्तास्वादृतो भवेत्[3] ॥ १६ ॥

तैर्यग्योनाः = तिर्यग्योनिभवाः, शुकशारिकाद्यः ।

महाभारते[4] —

मन्त्रभेदस्य यत्प्राज्ञो[5] द्वाराणीमानि कल्पयेत्[6] ।
अथ सम्पत्तिकामश्च[7] रक्षेदेतानि नित्यशः ॥ १७ ॥
मदं स्वप्नमवज्ञानमाकारं[8] चात्मसम्भवम् ।
दुष्टामात्येषु विस्रम्भं दूतं चाकुशलं तथा[9] ॥ १८ ॥
मन्त्रनिश्चयतत्त्वज्ञं षाड्गुण्यं गुणवेदिनः ।
शक्तान् कुलोचितान् भक्ताननाचारितपूर्वकान् ॥ १९ ॥
नीतिज्ञान् व्यवहारज्ञानितिहासार्थकोविदान् ।
इङ्गितज्ञानुपायज्ञान् शूरान् वीरान् कुलोद्गतान् ॥ २० ॥
सर्वकार्येषु निपुणानिष्वस्त्रविधिपारगान् ।
दुर्गयन्त्रविधानज्ञान् धर्मशास्त्रार्थपारगान् ॥ २१ ॥
अक्षुद्रान् क्षमिणः प्राज्ञाननागतविधायिनः ।
आयत्यां प्रतिकारज्ञांस्तदात्वे दृढनिश्चयान् ॥ २२ ॥
द्विषन्मित्राद्युदासीनभावज्ञान्संशितव्रतान् ।
स्वभावगुणानचलानचलानिव भारत ! ॥ २३ ॥
धर्मशीलानकृपणांस्तथा सर्वोपधातिगान् ।
धिया सर्वान् सम्परीक्ष्य राजा कुर्वीत मन्त्रिणः ॥ २४ ॥
यस्य राजधुरां वोढुं समर्थाः सद्गवा इव ।
तैः समेत्य महीपालो गुप्तमन्त्रो जितेन्द्रियः ।
विधानां दर्शने यत्नात्तिष्ठेद्भरतर्षभ ! ॥ २५ ॥

---

१. 7. 149, 50. २. ऽपसारयेत् for प्रसेधयेत् इति मु० म०. ३. ०स्तस्मा० ०त्तास्वा० इति मु० म० ४. Udyogaparva, 39. 37 c-d, 38, 39. ५. पद् प्राज्ञो for यत् प्राज्ञो इति मु० महा० ६. लक्षयेत् for कल्पयेत् इति मु० महा० ७. अर्थसन्तति० for अथ सम्पत्ति० इति मु० महा० ८. ०मवि० for ०मव० इति मु० महा० ९. दूताच्चाकुशलादपि for दूतं चाकुशलं तथा इति मु० महा०

अनाचारितपूर्वकान्=वाचाऽनवमानितान्। सर्वोपधातिगान्=सर्वच्छद्मविवर्जितान्।

मत्स्यपुराणे[1]—

नैकस्तु मन्त्रयेन्मन्त्रं न राजा[2] बहुभिः सह।
नारुह्य[3] विषमां नावमपरीक्षितनाविकाम्॥ २६॥

श्रीरामायणे[4]—

अनभिज्ञाय शास्त्राणि[5] बहव[6] पशुबुद्धय।
प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रेष्वभ्यन्तरीकृता॥ २७॥
मन्त्रिरूपा हि रिपव सम्भाव्यास्ते विचक्षणै।
ये हितोदयमुत्सृज्य विपरीतोपसेविन॥ २८॥
अहित हि[7] हिताकार धार्ष्ट्याज्जल्पन्ति ये नरा।
अवेक्ष्या[8] मन्त्रबाह्यास्ते कर्तव्या कृत्यदूषणा॥ २९॥
विनाशाय स्वभर्तुर्हि सहिता[9] शत्रुभिर्बुधै।
विपरीतानि कृत्यानि कारयन्ति हि मन्त्रिण॥ ३०॥

[10]मनु —

मौलाञ्छास्त्रविद शूराल्लब्धलक्ष्यान् कुलोद्गतान्[11]।
सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान्॥ ३१॥
तेषा स्व स्वमभिप्रायमुपलभ्य पृथक् पृथक्।
समस्ताना च कार्येषु विदध्याद्धितमात्मन॥ ३२॥
सर्वेषा तु विशिष्टेन ब्राह्मणेन विपश्चिता।
मन्त्रयेत्परम मन्त्र राजा षाड्गुण्यसयुतम्॥ ३३॥
नित्य तस्मिन् समाश्वस्त सर्वकार्याणि निक्षिपेत्।
तेन सार्द्धं विनिश्चित्य तत कार्यं[12] समारभेत्॥ ३४॥

---

१ 220 37cd 38ab  २ राजा न for न राजा इति मु० मत्स्य० ३ नारोहेद् for नारुह्य इति मु० मत्स्य० ४ Yuddhakānda 63 14, नास्ति, 16, 17. ५ शास्त्रार्थान् for शास्त्राणि इति मु० रा०. ६ पुरुषा for बहव इति मु० रा० ७ च for हि इति मु० रा० ८ अवेक्ष्य for अवेक्ष्या इति मु० रा० ९ विनाशयन्तो भर्तार सहिता for विनाशाय स्वभर्तुर्हि सहिता इति मु० रा० १० 7 54 49 ११ ०द्गतान for ०द्गतान् इति मु० म० १२ कर्म for कार्यं इति मु० म०

श्रीरामायणे —

यत्प्रियं च हितं चैव साधु धर्म्यं च सर्वशः ।
प्रयुस्तन्मन्त्रिणो वाक्यं मन्त्र्यमाणे विशेषतः ॥ ३५ ॥[1]
प्राप्ते कार्ये शरीरं तु नेतुं स्वां गुणसम्पदम् ।
प्रियमुत्सृज्य वक्तव्यं हितमेव हि मन्त्रिणा ॥ ३६ ॥[2]
सुलभाः पुरुषा राजन् सततं प्रियवेदिनः[3] ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ३७ ॥[4]

मन्त्रिण इत्यनुवृत्तौ मनुः[5] —

तैस्सार्द्धं चिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम् ।
स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥ ३८ ॥
मध्यन्दिने च रात्रौ च[6] विश्रान्तो विगतक्लमः ।
चिन्तयेद्धर्मकामार्थान् सार्द्धं तैरेक एव वा ॥ ३९ ॥
परस्परविरुद्धानां तेषां च समुपार्जनम् ।
कन्यानां सम्प्रदानं च कुमाराणां च रक्षणम् ॥ ४० ॥
दूतसम्प्रेषणं चैव कार्यशेषं तथैव च ।
अन्तःपुरप्रचारं च प्रणधीनां च चेष्टितम् ॥ ४१ ॥
कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च यत्नतः[7] ।
अनुरागापरागौ च प्रचारं मण्डलस्य च ॥ ४२ ॥
मध्यमस्य प्रचारं च विजिगीषोश्च चेष्टितम् ।
उदासीनप्रचारं च शत्रोश्चैव प्रयत्नतः ४३ ॥
एताः प्रकृतयो मूलं मण्डलस्य समासतः ।
अष्टौ चान्याः समाख्याता द्वादशैव तु ताः स्मृताः ॥४४॥
अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः ।
प्रत्येकं कथिता ह्येताः संक्षेपेण द्विसप्ततिः ॥ ४५ ॥
अनन्तरमरिं विद्यादरिसेविनमेव च ।
अरेरनन्तरं मित्रमुदासीनं तयोः परम् ॥ ४६ ॥

---

१. नास्ति. २. नास्ति. ३. ०वादिनः for ०वेदिन इति मु० रा० ४. Aranyakāṇḍa 37. 2. 6. ५. 7. 56, 158. ६. ०ऽर्धरात्रे वा for ०च रात्रौ च इति मु० म० ७. तत्त्वतः for यत्नतः इति मु० म०

विप्रकृष्टश्चान्यनायत्तमुदासीनो बलान्वित ।
अरिलो मण्डलार्थस्तु यस्मिन् ज्ञेय स मध्यम ॥ ४७ ॥[2]
प्राज्ञ कुलीन दातार[3] शूर दक्ष तथैव च[3] ।
कृतज्ञ शक्तिमन्त[4] च कष्टमाहुररिं बुधा ॥ ४८ ॥[5]
आर्यता पुरुषज्ञान शौर्यं करुणवेदिता ।
स्थौललक्ष्य[6] च सततमुदासीनगुणोदय ॥ ४९ ॥
तान्सर्वानभिसन्दध्यात्सामादिभिरुपक्रमै ।
व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥ ५० ॥

स्थान चतुर्विधम्—सैन्यकोशपुरराष्ट्रभेदनम् । समुदय =कृषिव्रजवनगुल्मस्थान वणिक्पथशुल्कदण्डादि । गुप्ति =राष्ट्रादिरक्षा । लब्धप्रशमनम्=दवनाश्रमविद्यावता धार्मिकाणा दानसम्मानयोग । तथा धर्मार्थकामाना समुपार्जन सम्यगविरोधनोत्पादनम् । प्रणिधय चरा । अष्टविध कर्म उशनसोक्त[7] यथा—

आदान च विसर्गं च तथा प्रवनिषधयो ।
पञ्चमे चार्थवचने व्यवहारस्य चक्षणा ॥ ५१ ॥
दण्डशुद्धौ तथा युक्त आत्मशुद्धा तथैव च ।
अष्टकर्मा दिव याति राजा शक्राभिपूजित ॥ ५२ ॥ इति ।

पञ्चवर्ग =पञ्चप्रकाराणा चाराणा समूह । ते च यथा श्रद्धेयदशविशेष शिल्पिभाषादिविदो जना । तथा कुब्जवामनकिरातमूकबधिरजडान्धादिच्छविन । तथा नटनर्तनगायनादय । तथा स्त्रियोऽभ्यन्तरचारिण्य । तथा श्रमणादय । एतेषां प्रवृत्ति ज्ञानार्थाश्चारसमूहा । स्वस्य परस्य योद्धव्या । अनुरागापरागौ मन्त्रिपुरोहितसेनापतियुवराजदौवारिकादीनामात्मीयपञ्चविधचारवशाद् बोद्धव्यौ इत्यर्थ । मध्यमस्य प्रचारमिति । एतस्मिन् राजमण्डले इमारचतस्रो राजप्रकृतयो भवन्ति —विजिगीषु

१ विप्रकृष्टेऽध्वनो यत्र उदासीनो for विप्रकृष्टेऽध्वन्यनायत्तमुदासीनो इति मु०म०
२. The published edition of Manusmṛti puts this verse within brackets and assigns the figure of enumeration 13 to it ३ शूरं च दक्षं दातारमेव च for दातार शूर दक्ष तथैव च इति मु० म ४ धृति० for शक्ति० इति मु० म० ५ Manu, 7 210, 211 159 ६ So Manu स्थूललक्षता MS
७ The following two verses attributed to Usanas are not found in the published edition of Sukranīti

.৯০৭
रिमध्यम उदासीन इति। तत्रैषामेव राजप्रकृतिसम्पन्नो जेतुमभ्युद्यतः स विजिगीषुः। शत्रुस्त्रिविधः-सहजः कृत्रिमः स्वभूम्यनन्तर इति। मध्यमः—अनयोररिविजिगीष्वोर्वृत्तयोरसंहतयोर्निग्रहसमर्थः। उदासीनः-अरिविजिगीषुमध्यम नामसंहतानां निग्रहसमर्थः। एतासां चतसृणां मण्डलस्य मूलप्रकृतीनामेकैकस्याः प्रकृतेर्मित्रममित्रं चेति द्वे द्वे प्रकृती। एवा अष्टौ आद्याश्चतस्र एवमुभयतो द्वादश भवन्ति। अमात्येत्यादि। अमात्यादयः पञ्च प्रकृतयः द्वादशानां प्रकृतीनामेकस्या भवन्त्यतः षड् द्वादशका द्विसप्ततिर्भवन्ति।

महाभारते—

विजिगीषोररिर्मित्रमरेर्मित्रमतः परम् ।
मित्रमित्रं शत्रुमित्रमित्रं ज्ञेयं पुरस्सरम् ॥ ५३ ॥
पार्ष्णिग्राहस्तथाक्रन्दः पार्ष्ण्यासारश्च पृष्ठतः ।
आक्रन्दासार इति च ज्ञेयं मण्डलचिन्तकैः ॥ ५४ ॥
पार्ष्णिग्राहाभिसारं च पार्ष्णिग्राहं च विग्रहे ।
राजाक्रन्दाभिसारेण तथाऽऽक्रन्देन वर्धयेत् ॥ ५५ ॥
विरोधयेच्छत्रुमित्रं मित्रमित्रमरेस्तथा ।
मित्रेण मित्रमित्रेण मध्यमत्वामित्राल्लकः ।
मन्त्रप्रभूत्साहशक्तीः पालयेदात्मवान्नृपः ॥ ५६ ॥

वर्धयेत्=छेदयेत ॥

अथ षाड्गुण्यम् (१३)

तत्र मनु[1]:—

सन्धिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥ १ ॥
आसनं चैव यानं च सन्धाय च विगृह्य च[2] ।
कार्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च ॥ २ ॥
सन्धिं तु द्विविधं विद्याद्राजा विग्रहमेव च ।
उभे यानासने चैव द्वैधं संश्रयमेव च[3] ॥ ३ ॥
समानयानकर्मा च विपरीतस्तथैव च ।

१. Manu. 7. 160-180; 9. 298-300. २. सन्धिं विग्रहमेव च for सन्धाय च विगृह्य च इति मु० म०. ३. द्विविधः संश्रयः for द्वैधं संश्रयमेव च इति मु० म०

तदात्वायतिसयुक्त सन्धिर्ज्ञेयो विचक्षणौ[1] ॥ ४ ॥
स्वयकृतश्च कार्यार्थमकाले काल एव च[2] ।
मित्रे चैवाप्यपकृते[3] द्विविधो विग्रह स्मृत ॥ ५ ॥
एकाकिनश्चात्ययिके काले[4] प्राप्ते यदृच्छया ।
सहतस्य च मित्रेण द्विविध यानमुच्यते ॥ ६ ॥
क्षीणस्य चैव क्रमशो दैवात्पूर्वकृतेन वा ।
मित्रस्य चानुरोधेन द्विविध स्मृतमासनम् ॥ ७ ॥
बलस्य स्वामिनश्चैव स्थिति कार्यस्य[5] सिद्धये ।
द्विविध कीर्त्यते द्वैध षाड्गुण्यगुणवेदिभि ॥ ८ ॥
अर्थसम्पादनार्थं च पीड्यमानस्य शत्रुभि ।
साधुषु व्यपदेशार्थं[6] द्विविध सश्रय स्मृत ॥ ९ ॥
यदावगच्छेदायत्यामाधिक्य ध्रुवमात्मन ।
तदात्वे चाधिका[7] पीडा तदा सन्धि समाश्रयेत् ॥१०॥
यदा [8]प्रकृष्टान्मन्येत सर्वास्तु प्रकृतीन्[9] भृशम् ।
अत्युच्छ्रित तथाऽऽत्मान तदा मन्येत[10] विग्रहम् ॥११॥
यदा मन्येत भावेन हृष्ट पुष्ट बल स्वकम् ।
परस्य विपरीत च तदा यायाद्रिपु प्रति ॥ १२ ॥
यदा तु स्यात्परिक्षीणो वाहनेन बलेन च ।
तदासीत प्रयत्नेन शनकै सान्त्वयन्नरीन् ॥ १३ ॥
मन्येतारिं यदा राजा सर्वथा बलवत्तरम् ।
तथा द्विधा बल कृत्वा साधयेत्कार्यमात्मन ॥ १४ ॥
यदा परबलाना तु गमनीयतमो भवेत् ।
तदा तु सश्रयेत्क्षिप्र धार्मिक बलिन रिपुम् ॥ १५ ॥

---

१ द्विलक्षणा for विचक्षणौ इति मु० म० २ वा for च इति मु० म० ३ मित्रस्य चैवापकृते for मित्रे चैवाप्यपकृते इति मु० म० ४ कार्ये for काले इति मु० म० ५ कार्यार्थं for कार्यस्य इति मु० म० ६ So Manu, व्यपदेशार्थ MS ७ चाल्पिका for चाधिका इति मु० म० ८ प्रहृष्टान् for प्रकृष्टान् इति मु० म० ९ सर्वास्तु प्रकृती for सर्वास्तु प्रकृतान् इति मु० म० १० मुच्येत for मन्येत इति मु० म०

निग्रहं प्रकृतीनां च कुर्याद्योऽरिबलस्य च।
उपसेवेत तं नित्यं सर्वयत्नैर्गुरुं तथा[1] ॥ १६ ॥
यदि तत्रापि स[2] पश्येद्दोषं संश्रयकारितम्।
सुयुद्धमेव तत्रापि निर्विशङ्कः समाचरेत् ॥ १७ ॥
सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपतिः।
यथास्याभ्यधिका[3] न स्युर्मित्रोदासीनशत्रवः ॥ १८ ॥
आयतिं सर्वकार्याणां तदात्वं च विचारयेत्।
अतीतानां च सर्वेषां गुणदोषौ च तत्त्वतः ॥ १९ ॥
आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः।
अतीते कार्यशेषज्ञः शत्रुभिर्नाभिभूयते ॥ २० ॥
यथैनं नाभिसन्दध्युर्मित्रोदासीनशत्रवः।
तथा सर्वं [4]समादध्यादेष सामासिको नयः ॥ २१ ॥
चारेणोत्साहयोगेन क्रिययैव च कर्मणाम्।
स्वशक्तिं परशक्तिं च नित्यं विद्यात्परात्मनोः[5] ॥ २२ ॥
पीडनानि च सर्वाणि व्यसनानि तथैव च।
आरभेत ततः कार्यं सञ्चिन्त्य गुरुलाघवम् ॥ २३ ॥
आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः[6]।
कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥ २४ ॥

## अथ यात्रा ( १४ )

तत्र मनुः[7]—

यदा तु यानमातिष्ठेदरिराष्ट्रं प्रति प्रभुः।
तदानेन विधानेन यायादरिपुरं शनैः ॥ १ ॥
मार्गशीर्षे शुभे मासे यायाद्यात्रां महीपतिः।
फाल्गुनं वाऽथ चैत्रं वा मासौ प्रति यथाबलम् ॥ २ ॥
अन्येष्वपि तु कालेषु यदा पश्येद्ध्रुवं जयम्।
तदा यायाद्विगृह्यैव व्यसने वोत्थिते रिपोः ॥ ३ ॥

---

१. यथा for तथा इति मु० म० २. संपश्ये० for स पश्ये० इति मु० म० ३. यथास्माद० for यथास्याभ्य० इति मु० म० ४. संविद० for समाद० इति मु० म० ५. विद्यान्महीपतिः for विद्यात्परात्मनोः इति मु० म० ६. So Manu,; परः परः MS. ७. 7. 181-183.

याज्ञवल्क्यः[1]—

यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् ।
परश्च हीन आत्मा च हृष्टवाहनपूरुषः ॥ ४ ॥

मत्स्यपुराणे[2]—

यदा मन्येत नृपतिराक्रन्देन वलीयसा ।
पार्ष्णिग्राहाभिभूतोऽयं[3] तदा यात्रां प्रयोजयेत् ॥ ५ ॥
पार्ष्णिग्राहाधिकं सैन्यं मूले निक्षिप्य च व्रजेत् ।
दिव्यान्तरिक्षक्षितिजैरुत्पातैः पीडितं परम् ।
तमृक्षपीडासन्तप्तं[4] पीडितञ्च तथा[5] ग्रहैः ॥ ६ ॥
स्ववलव्यसनोपेतं तथा दुर्भिक्षपीडितम् ।
सम्भूतान्तरकोपं च क्षिप्रं [6]यायादरिं नृपः ॥ ७ ॥
शरीरस्फुरणे धन्ये तथा सुस्वप्नदर्शने[7] ।
निमित्ते शकुने धन्ये जाते शत्रुपुरं व्रजेत्[8] ॥ ८ ॥
अङ्गदक्षिणभागे[9] तु शस्तं प्रस्फुरणं शुभम्[10] ।
अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च ॥ ९ ॥[11]
लाञ्छनं पिटकं चैव ज्ञेयं स्फुरणवत्तथा ।
विपर्ययेण विहितः[12] सर्वः स्त्रीणां[13] फलागमः[14] ।
दक्षिणेऽपि प्रशस्तेऽङ्गे प्रशस्तं स्याद्विशेषतः ॥ १० ॥
अतोऽन्यथा [15]सिद्धिरमल्पनात्तु फलस्य शस्तस्य च[16] निन्दितस्य ।
अनिष्टचिह्नोपगमे[17] द्विजानां कार्यं [18]सुवर्णेन च[19] तर्पणं स्यात् ॥ ११ ॥

---

१. I. 348. २. Matsyapu 240. 2, 4. c-d, 7, 9 c-d, 10 a-b, 15 c-d. ३. ०तोरिः for ०तोयं इति मु० मत्स्य० ४. पडक्ष० for तमृक्ष० इति मु० मत्स्य० ५. तथा for यथा इति मु० मत्स्य० ६. प्राया० for याया० इति मु० मत्स्य० ७ दुःस्वप्ननाशने *for* सुस्वप्नदर्शने इति मु० मत्स्य० ८ *This line* is missing in Matsyapu. ९. So Matsyapu; अङ्गा० for अङ्ग० MS. १०. भवेत् for शुभम् इति मु० मत्स्य० ११. Matsyapu. 241. 2, 12, 13c-d, 14. १२. So Matsyapu; विहितं MS १३ So Matsyapu.; सर्वं MS: १४. विपर्ययम् for फलागम इति मु० मत्स्य० १५. ०प्रमल्प० for ०रमल्प० १६. च for वि इति मु० मत्स्य० १७. अनिष्ट० for अरिष्ट० इति मु० मत्स्य० १८. So Matsya; सवर्णेन MS १९. तु for च इति मु० मत्स्य०

रामायणे[1] शुभाशुभविषये त्रिजटावाक्यम्—

समग्रभवनां कृत्स्नां ग्रसमानः पुरीमिमाम् ।
स्वप्ने रामो मया दृष्टो रुधिरं पीतवान् बहु ॥ १२ ॥
गजदन्तमयीं दिव्यां शिविकामन्तरिक्षगाम् ।
युक्तां नागसहस्रेण[2] सुखमास्थाय[3] राघवः ॥ १३ ॥
स्वप्ने चाद्य मया दृष्टः[4] शुक्लाम्बरवरावृतः[5] ।
सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थितः[6] ॥ १४ ॥
राघवश्च मया दृष्टश्चतुर्दन्तं महागजम् ।[7]
आरूढः शैलसंकाशं विचरन्[8] सहलक्ष्मणः ॥ १५ ॥
सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थितः ।[9]
ततस्तौ नरशार्दूलौ दीप्यमानौ स्वतेजसा [10]॥ १६ ॥
शुक्लमाल्याम्बरधरौ जानकीं पर्युपस्थितौ ।
ततस्तस्य नगस्याग्रादाकाशस्थस्य[11] दन्तिनः ॥१७॥
भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ।
भर्तुरङ्कात्समुत्पत्य ततः कमललोचना ॥ १८ ॥
चन्द्रसूर्यौ मया दृष्टा[12] पाणिना परिमार्जती ।
ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः ॥ १९ ॥
सीतया च विशालाक्ष्या लङ्कां पर्यभितः[13] स्थितः ।
पाण्डरर्षभयुक्तेन रथेनाष्टयुजा स्वयम् ॥ २० ॥

---

१. The first verse is missing in Rāmāyaṇa; Sundarakāṇḍa 27. 9c-d, 10a-b. २. हंस० for नाग० इति मु० रा० ३. स्वय० for सुख० इति मु० रा० ४. दृष्टा for दृष्टः इति मु० रा० ५. सीता शुक्लाम्बरावृता for शुक्लाम्बरवरावृतः इति मु० रा० ६. See note 9 below. ०मास्थिता for ०मास्थितः इति मु० रा० ७. Sundara. 27. 12c-d. ८. चकास for विचरन् इति मु० रा० ९. Rāmāyaṇa treats this verse as the second hemistich of the eleventh verse. १०. Sundara 27. 13c-d—17. ११. ०स्यामे ह्याका० for ०स्याग्रादाका० इति मु० रा०. १२. दृष्टौ for दृष्टा इति मु० रा०. १३. लङ्काया उपरि for लङ्कां पर्यभितः इति मु० रा०.

शुक्लमाल्याम्बरो रामो[1] लक्ष्मणेन सहागत[2]।[3]
विमानात्पुष्पकादद्य रावणः पतितो मया[4]।
कृष्यमाणः[5] स्त्रिया दृष्टो मुण्ड पीताम्बरो हसन्[6]॥२१॥[7]
रथेन खरयुक्तेन रक्तमाल्यानुलेपन ।[8]
स गत्वा दक्षिणामाशा प्रविष्टो गोमयह्रदम् ॥ २२ ॥[9]
कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी ।[10]
काली करालवदना[11] दिश याम्यां प्रकर्षति ॥ २३ ॥
वराहेण दशग्रीव शिंशुमारेण चेन्द्रजित्[12]।[13]
उष्ट्रेण कुम्भकर्णश्च[14] प्रयातो दक्षिणा दिशाम्।[15]
समाजश्च मय, दृष्टो गीतवादित्रनृत्यवान्[16]॥ २४ ॥[17]
बिभ्रता[18] रक्तमाल्यानि[19] रक्षसा रक्तवाससाम् ।
लङ्का चेय पुरी दृष्टा[20] गजवाजिरथाकुला[21] ॥ २५ ॥[22]
सागरे पतिता कृत्स्ना[23] भग्नप्राकारतोरणा[24]।[25]
पीत्वा तैल प्रनृत्यन्ति[26] प्रहसन्ति[27] महास्वरा ॥ २६ ॥
लङ्कायां भस्मरूक्षाया सर्वराक्षसयोषित[28]।
कुम्भकर्णादयश्चेमे सर्वे राक्षसपुङ्गवा[29]।

---

१ ०म्बरधरो for ०म्बरो रामो इति मु० रा० २. समा० for सहा० इति मु० रा० ३ Ibid 27. 18a b. ४ भुवि for मया इति मु० रा० ५ So Rāmāyaṇa. कुरयमाणा. MS ६ कृष्णाम्बर पुन for पीताम्बरो हसन् इति मु०रा० ७ 27. 24. ८. Sundarakānda 27 25a b ९ This line is not found in Ramāyana १०. Ibid 29c d ११ कर्दमजिह्माङ्गी for करालवदना इति मु० रा० १२ So Rāmayana, चासक्रन् MS १३ Ibid 31 १४. So Ramāyaṇa, च मया दृष्ट for कुम्भकर्णश्च MS १५ Ibid 32a b १६ ०वादित्रनि स्वन. for ०वादित्रनृत्यवान् इति मु० रा० १७ Ibid 35c d १८ पिबता for बिभ्रता इति मु० रा० १९ ०माल्यानां for ०माल्यानि इति मु० रा० २० रम्या for दृष्टा इति मु० रा० २१ सवाजिरथकुञ्जरा for गजवाजिरथाकुला इति मु०रा० २२ Ibid 36 २३ दृष्टा for कृत्स्ना इति मु०रा० २४. ०गोपुर० for ०प्राकार० इति मु० रा० २५ Ibid 37a b २६ प्रनृत्ताश्च for प्रनृत्यन्ति इति मु० रा० २७ प्रहसन्त्यो for प्रहसन्ति इति मु० रा० २८. प्रविष्टा राक्षसस्त्रिय. for सर्वराक्षसयोषित इति मु० रा० २९ Ibid. 39

पीतैर्निवसनैर्द्दृष्टाः क्रीडन्तो गोमयह्रदे ॥ २७ ॥[1]

मत्स्यपुराणे[2]—

इदानीं कथयिष्यामि निमित्तं स्वप्नदर्शने ।
नाभिं विनाऽन्यगात्रेषु तृणवृक्षसमुद्भवः ॥ २८ ॥
चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ।
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥ २९ ॥
उच्चैः प्रपतनं चैव दोलारोहणमेव च ।
अञ्जनं[3] पद्मलोहानां[4] तपतामपि धारणम्[5] ॥ ३० ॥
रक्तपुष्पद्रुमाणां च मण्डलस्य[6] तथैव च ।
वराहर्क्षखरोष्ट्राणां तथा चारोहणक्रिया ॥ ३१ ॥
भक्षणं पक्वमांसानां[7] तैलस्य कृसरस्य च ।
नर्तनं हसनं चैव विवाहो गीतमेव च ॥ ३२ ॥
तन्त्रीवाद्यविहीनानां वाद्यानामपि[8] वादनम् ।
स्रोतोऽवगाहो[9] गमनं स्नानं गोमयवारिणा ॥ ३३ ॥
पङ्कोदकेन च तथा महीतोयेन वाप्यथ ।
मातुः प्रवेशो जठरे चितारोहणमेव च ॥ ३४ ॥
शक्रध्वजानां[10] पतनं पतनं शशिसूर्ययोः ।
दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ॥ ३५ ॥
देवद्विजातिभूपालगुरूणां क्रोध एव च ।
आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम् ॥ ३६ ॥
हानिश्चैव स्वगात्राणां विरेकवमनक्रिया ।
दक्षिणाशाभिगमनं व्याधिनाभिभवस्तथा ॥ ३७ ॥
फलापहारहानिश्च गृहाणां चैव पातनम् ।

---

१. This line is missing in Rāmāyaṇa. २. Matsyapu. 242, 2-18, 19c-d, 20-35; 50 20-35. ३. अर्जनं for अञ्जनं इति मु० मत्स्य०. ४. पङ्क० for पद्म० इति मु० मत्स्य०. ५. हयानामपि मारणम् for तपतामपि धारणम् इति मु० मत्स्य० ६. So Matsyapu. चण्डालस्य MS. ७. पक्षिमत्स्यानां for पक्वमांसानाम् इति मु० मत्स्य०. ८. ०मभि० for ०मपि इति मु० मत्स्य०. ९. ०गाहु-गमनं for ०गाहो गमनं इति मु० मत्स्य०. १०. ध्वजाभि० for ध्वजानां इति मु० मत्स्य०.

गृहसम्मार्जन चैव धनहानि विनिर्दिशेत्[1] ॥ ३८ ॥
पीडा[2] पिशाचक्रव्यादवानरान्त्यनरैरपि[3] ।
परादभिभवश्चैव तस्माच्च व्यसनोद्भव ॥ ३९ ॥
काषायवस्त्रधारित्व तद्वत्स्त्रीक्रीडन तथा ।
स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम् ॥ ४० ॥
तद्वत्स्त्रीक्रीडनम्=काषायवस्त्रयुक्तस्त्रिया सह क्रीडनम् ।
एवमादीनि चान्यानि[4] दुःस्वप्नानि विनिर्दिशेत् ।
एषा[5] सकथन धन्य भूयश्च[6] स्वपन तथा ॥ ४१ ॥
कल्ये[7] स्नान तिलैर्होमो ब्राह्मणानाञ्च पूजनम् ।
स्तुतिश्च वासुदेवस्य तथा तस्यैव पूजनम् ॥ ४२ ॥
नागेन्द्रमोक्षस्तवन[8] ज्ञेय दुःस्वप्ननाशनम् ।
स्वप्नास्तु प्रथमे यामे सवत्सरविपाकिन ॥ ४३ ॥
षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्तृतीयके ।
चतुर्थे मासमात्रेण पश्यतो नात्र सशय ॥ ४४ ॥
एकस्या यदि वा रात्रौ शुभ वा यदि वाऽशुभम् ।
पश्चाद् दृष्टस्तु यस्तत्र तस्य पाक विनिर्दिशेत् ।
तस्माच्छोभनके स्वप्न पश्चात्स्वापो[9] न शस्यते ॥ ४५ ॥
शैलप्रासादनागाश्ववृषभारोहण हितम् ।
द्रुमाणा श्वेतपुष्पाणा गमन च तथा द्विज[1] ॥ ४६ ॥
द्रुमतृणोद्भवो नाभौ[10] तथा च बहुबाहुता ।
तथैव[11] बहुशीर्षत्व पलितोद्भव एव च ॥ ४७ ॥

१. For this verse Matsyapu reads फलापहानिश्च तथा पुष्पहानिस्तथैव च । गृहाणा चैव पातश्च गृहसमार्जन तथा २ क्रीडा for पीडा इति मु० मत्स्य० ३ वानरर्क्ष० for वानरान्त्य० इति मु० मत्स्य० ४ So Matsyapu, धन्यानि MS ५ एषा सकथन for एषामकथन इति मु० मत्स्य० ६ भूय प्रस्वापन for भूयश्च स्वपन इति मु० मत्स्य० ७ कल्क्ये० for कल्ये इति मु० मत्स्य० ८. ०श्रवणा for ०स्तवन इति मु० मत्स्य० ९ ०त्स्नानो इति मु मत्स्य०,•त्स्वप्न MS The above reading ०त्स्वापो is supplied by the Editor १० नाभौ for पादौ इति मु० मत्स्य० ११ तथैव for तथा च इति मु० मत्स्य०

सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता ।
चन्द्रार्कतारामसनं[1] परिमार्जनमेव च ॥ ४८ ॥
शक्रध्वजालिङ्गनं च तदुच्छ्रायक्रिया तथा ।
भूम्यम्बुधेरामसनं[2] शत्रूणां च वधक्रिया ॥ ४९ ॥
जयो विवादे द्यूतेषु[3] संग्रामे[4] च तथा द्विज ।
भक्षणं [5]चाममांसानां मत्स्यानां पायसस्य च ॥ ५० ॥
दर्शनं रुधिरस्यापि स्नानं च[6] रुधिरेण ह[7] ।
सुरारुधिरमद्यानां पानं क्षीरस्य चाप्यथ[8] ॥ ५१ ॥
अन्त्रैर्विचेष्टनं[9] भूमौ निर्मलं गगनं तथा ।
मुखेन दोहनं शस्तं महिषीणां तथा गवाम्[10] ॥ ५२ ॥
सिंहीनां हस्तिनीनां च वडवानां तथैव च ।
प्रसादो देवविप्रेभ्यो गुरुभ्यश्च तथा शुभः ॥ ५३ ॥
अम्भसा त्वभिषेकश्च [11] गवां शृङ्गाश्रितेन[12] च ।
चन्द्राद्भ्रष्टेन वै राजन् ज्ञेयो राज्यप्रदो हि सः ॥ ५४ ॥
राज्याभिषेकश्च तथा छेदनं शिरसस्तथा ।
मरणं वह्निदाहश्च वह्निदाहो गृहादिषु ॥ ५५ ॥
लब्धिश्च राज्यलिङ्गानां तन्त्रीवाद्यादिवादनम् ।
तथोदकानां तरणं[13] विषमस्य[14] च लङ्घनम् ॥ ५६ ॥
हस्तिनीवडवानां च गवां च प्रसवो गृहे ।
आरोहणं [15]तथाऽश्वानां रोदनं च तथा शुभम् ॥ ५७ ॥

---

१. ०ग्रहणं for ०मसनं इति मु० मत्स्य० २. ०म्बुधीनां ग्र० for म्बुधेराम० इति मु० मत्स्य० ३. द्यूते च for द्यूतेषु इति मु० मत्स्य० ४. So Matsyapu. सङ्गमे MS. ५. चार्द्र० for चाम० इति मु० मत्स्य० ६. वा for च इति मु० मत्स्य० ७. च for ह इति मु० मत्स्य० ८. चाथ वा for चाप्यथ इति मु० मत्स्य० ९. ०र्थविष्टनं for ०र्विचेष्टन इति मु० मत्स्य० १०. तथा गवाम् for गवां तथा इति मु० मत्स्य० ११. ०पेकस्तु for ०पेकश्च इति मु० मत्स्य० १२ शृङ्गस्तु० for शृङ्गाश्रि० इति मु० मत्स्य० १३. So Matsyapu.; वरणं MS. १४. तथा विषम for विषमस्य च इति मु० मत्स्य० १५. ०णामथा for ०णं तथा इति मु० मत्स्य०

वरस्त्रीणां तथा लाभस्तथालिङ्गनमेव च ।
निगडैर्बन्धनं धन्यं तथा विष्ठानुलेपनम् ॥ ५८ ॥
जीवतां भूमिपालानां सुहृदामपि दर्शनम् ।
दर्शनं देवतार्चानां[1] विमलानां तथाऽम्भसाम् ॥ ५९ ॥
शुभान्यथैतानि नरस्तु दृष्ट्वा
प्राप्नोत्ययत्नाद् ध्रुवमर्थलाभम् ।
स्वप्नानि धर्मज्ञभृतां[2] वरिष्ठ !
व्याधेर्विमोक्षं च तथाऽऽतुरोऽपि ॥ ६० ॥

मनुः[3]—

कृत्वा विधानं मूले तु यात्रिकं च यथाविधि ।
उपगृह्यास्पदं चैव चारान् सम्यग्विधाय च ॥ ६१ ॥
संशोध्य त्रिविधं मार्गं षड्विधं च बलं स्वकम् ।
साम्परायिककल्पेन यायाद्रिपुपुरं[4] प्रति[5] ॥ ६२ ॥
शत्रुसेविनि मित्रे च गूढे युक्ततरो भवेत् ।
गतप्रत्यागते चैव स हि कष्टतरो रिपुः ॥ ६३ ॥

साम्परायिककल्पेन=युद्धकल्पेन ।

मत्स्यपुराणे[6]—

पदातिनागबहुलां सेनां प्रावृषि योजयेत् ।
हेमन्ते शिशिरे चैव रथवाजिसमाकुलाम् ।
खरोष्ट्रबहुलां सेनां तथा ग्रीष्मे नराधिप ॥ ६४ ॥
[7]चतुर्विधबलोपेतां वसन्ते वा शरद्यथ ।
सेना पदातिबहुला यस्य स्यात्पृथिवीपते ॥ ६५ ॥
अभियोज्यो भवेत्तेन शत्रुर्विषममाश्रितः ।
[8]रम्ये वृक्षावृते देशे स्थितं शत्रुं तथैव च ॥ ६६ ॥
किञ्चित्पङ्के तथा यायाद् बहुनागो नराधिपः ।

---

१. देवतानां च for देवतार्चानां इति मु० मत्स्य० २ वै धर्मभृता for धर्मज्ञभृतां इति मु० मत्स्य० ३. 7. 184-186. ४. ०द्‌रि० for ०द्रिपु० इति मु० मत्स्य० ५. शनैः for प्रति इति मु० मत्स्य० ६. 240. 19c d, 20 27. ७. चतुरङ्ग० for चतुर्विध० इति मु० मत्स्य० ८. गम्ये for रम्ये इति मु० मत्स्य०

रथाश्वबहुलो यायात्क्षेत्रं समपथाश्रयम्[1] ॥ ६७ ॥
जलाश्रयं नौबहुलस्तथा राजा रिपून् जयेत्[2] ।
खरोष्ट्रबहुलो राजा शत्रुं बन्धनसंस्थितम्[3] ॥ ६८ ॥
बन्धनस्थोऽभियोज्योऽरिः सदा[4] प्रावृषि भूभुजा ।
हिमपातयुते देशे स्थितं ग्रीष्मे [5]नियोजयेत् ॥ ६९ ॥
यवसेन्धनसंयुक्तः[6] कालः[7] पार्थिव हैमनः[8] ।
शरद्वसन्तौ धर्मज्ञ ! कालौ साधारणौ स्मृतौ ॥ ७० ॥
विज्ञाय राजा द्विजदेशकालौ
दैवं त्रिकालं च तथैव बुद्ध्वा ।
यायात्परं कालविदां मतेन
सञ्चिन्त्य मानं द्विजमन्त्रविद्भिः ॥ ७१ ॥

मनुः[9]—

दण्डव्यूहेन तं मार्गं[10] यायात्तु शकटेन वा ।
वराहमकराभ्यां वा सूच्या वा गारुडेन वा ॥ ७२ ॥
यतः शङ्केत सभयं[11] ततो विस्तारयेद्बलम् ।
पाद्मेन[12] चैव व्यूहेन निवसेत[13] [14]तथा स्वदम् ॥७३॥
सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत् ।
[15]भयं यतो वा शङ्केत तां प्राचीं कल्पयेद्दिशम् ॥७४॥
गुल्मांश्च स्थापयेदाप्तान् शतसंख्यांस्ततस्ततः[16] ।

---

१. ०पथस्थितम् for ०पथाश्रयम् इति मु० मत्स्य० २. For this line Matsyapu. reads तमाश्रयन्तो बहुलास्तांस्तु राजा प्रपूजयेत् ३. शत्रुर्बन्धेन संस्थितः for शत्रुं बन्धनसंस्थितम् इति मु० मत्स्य० ४. तदा for सदा इति मु० मत्स्य० ५. ०ऽभि for नि० इति मु० मत्स्य० ६. So Matsyapu.; ०संयुक्ते MS. ७. So Matsyapu. काले MS.; ८. So Matsyapu.; हैमजे MS. ९. 7. 187—190. १०. तन्मार्गं for तं मार्गं इति मु० म० ११. यतश्च भयमाशङ्केत् for यतः शङ्केत सभयं इति मु० मत्स्य० १२. पद्मेन for पाद्मेन इति मु० मत्स्य० १३. निविशेत for निवसेत इति मु० मत्स्य० १४. सदा for तथा इति मु० मत्स्य० १५. यतश्च भयमाशङ्केत् प्राचीं तां for भयं यतो वा शङ्केत तां प्राचीं इति मु० मत्स्य० १६. कृतसंज्ञान्समन्ततः for शतसङ्ख्यांस्ततस्ततः

स्थाने युद्धे च [1]कुशलानभीतानविकारिण: ॥ ७५ ॥

शंखलिखितौ[2]...

राजक्रतुरेवाश्वमेधस्तं नासार्वभौमः प्रतिपादयितुमर्हति । अश्वमेधेन सह यदय इति परविषयमभिप्रायाद्देशकालशक्तिसम्पन्न. प्रभूतयवसेन्धनोदकाविच्छिन्नसाम्परायिकः पथि संविहितसर्वोपकरणो दुर्गसारामात्यदेशदण्डाक्रन्दाद्यगुणविधिज्ञः [3]पार्षदं प्रति नयवान् विदितमध्वानं हितमनुक्रामेत् । यथा भूमिभागस्तथा विनियोगः श्रेयान् पानभोजनोपनिवेशस्थानशङ्काप्रतिविधानकुशलो भूपतिरवहितं शत्रुणा सह युध्येत ।

याज्ञवल्क्यः[4]—

य एव धर्मो नृपतेः स्वराष्ट्रपरिपालने ।
तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन्[5] ॥ ७६ ॥

मनुः[6]—

उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् ।
दूषयेच्चास्य सततं यावसान्नोदकेन्धनम् ॥ ७७ ॥
भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा ।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा ॥ ७८ ॥
उपरुध्यानुपजपेद् बुध्येतैव च तत्कृतम् ।
युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः ॥ ७९ ॥
एवं विजयमानस्य येऽस्य स्युः परिपन्थिनः ।
तानानयेद्वशं सर्वान्सामादिभिरुपक्रमैः ॥ ८० ॥
यदि ते तु न तिष्ठेयुरुपायैः प्रथमैस्त्रिभिः ।
[8]दण्डेनाभि प्रसह्यैनान् शनकैर्वशमानयेत् ॥ ८१ ॥

याज्ञवल्क्यः[9]—

उपायाः साम दानं च भेदो दण्डस्तथैव च ।
सम्यक् प्रयुक्ताः सिद्धेयुर्दण्डस्त्वगतिका गतिः ॥ ८२ ॥

---

१. ०नभीरूनवि० for नभीतानवि० इति मु० मत्स्य० २. P 39. ३. पर्षदं for पार्षदं इति मु० शंखलि० ४ 1 342. ५ So Yajñavalkya; नयेत् MS. ६. 7. 195—197, 107 108 ७. ०उपजप्या० for उपरुध्या० इति मु० मत्स्य० ८. दण्डेनैव for दण्डेनाभि इति मु० मत्स्य० ९. 1. 346,

मनुः[1]—

सामादीनामुपायानां चतुर्णामपि पण्डिताः ।
सामदण्डौ प्रशंसन्ति नित्यं राज्याभिवृद्धये ॥ ८३ ॥

मत्स्यपुराणे[2]—

साम भेदस्तथा दानं दण्डश्च मनुजोत्तम[3] ।
उपेक्षा च तथा माया इन्द्रजालं च पार्थिव ! ॥ ८४ ॥
प्रयोगाः कथिताः सप्त तान्मे निगदतः शृणु ।
द्विविधं कथितं साम तथ्यं चातथ्यमेव च ॥ ८५ ॥
तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते ।
तथा साधुः[4] प्रयत्नेन सामसाध्यो नरोत्तम ॥ ८६ ॥
महाकुलीना ऋजवो धर्मनित्या जितेन्द्रियाः ।
सामसाध्या नचातथ्यं तेषु साम प्रयोजयेत् ॥ ८७ ॥
तथैव साम[5] कर्तव्यं कुलशीलादि वर्णयेत्[6] ।
तथा तदुपचाराणां कृतानां चैव वर्णनम् ॥ ८८ ॥
अनयैव यथायुक्तया कृतज्ञख्यापनं स्वकम् ।
एवं सान्त्वेन[7] कर्तव्या वशगा धर्मतत्पराः ॥ ८९ ॥
साम्ना यद्यपि रक्षांसि गृह्णन्तीति परा श्रुतिः ।
तथाप्येतदसाधूनां प्रयुक्तं नोपकारकम् ॥ ९० ॥
'[8]अविशङ्कमित्येवं पुरुषं [9]सामवेदिनम् ।
असाधवो विजानन्ति तस्मात्तत्तेषु वर्जयेत्[10]' ॥ ९१ ।
परस्परं च[11] ये [12]दुष्टाः क्रुद्धा भीतावमानिताः ।
तेषां भेदं प्रयुञ्जीत भेदसाध्या हि ते मताः ॥ ९२ ॥
आत्मीयां दर्शयेदाशां परस्माद्दर्शयेद्भयम् ।

---

१. 7. 109. २. 222. 2–9; 223. 1, 3, 4, ८ c-d, 9. ३. मनुजेश्वर for मनुजोत्तम इति मु० मत्स्य० ४. So Matsyapu; साधुः MS. ५. तथ्यं साम च for तथैव साम इति मु० मत्स्य० ६. ०वर्णनम् for वर्णयेत् इति मु० मत्स्य० ७. साम्ना च for सान्त्वेन इति मु० मत्स्य० ८. ०ङ्कित० for ०शङ्क० इति मु० मत्स्य० ९. ०वादिनम् for ०वेदिनम् इति मु० मत्स्य० १०. So Matsyapu.; वर्जितम् MS. ११. तु for च इति मु० मत्स्य० १२. दृष्टा for दुष्टाः इति मु० मत्स्य०

एवं हि भेदयेद्भिन्नान्यथावद्वशमानयेत् ॥ ६३ ॥
[1]संहता हि विना भेदं शक्रेणापि सुदु.सहा[2] ।
भेदमेव प्रशंसन्ति तस्मान्नयविशारदा. ॥ ६४ ॥
[3]महिषी युवराजश्च तथा सेनापतिर्द्विज ।
अमात्या मन्त्रिणश्चैव राजपुत्रास्तथैव च ।
अन्त.कोपा विनिर्दिष्टा दारुणा. पृथिवीक्षिताम्[3] ॥ ६५ ॥

अतिशङ्ककम्=अतिशयिता शङ्का यस्मिन् स तथा । सामवेदिनम्=सामप्रयोक्तारम् ।

मत्स्यपुराणे—

स्वपक्षभेदो यत्नेन न कर्तव्य. कदाचन ।
दुर्गं कोशश्च देशश्च परराष्ट्रभयं विना ।
स्वभेदेनैव नश्यन्ति बद्धमूला अपि प्रजा: ॥ ६६ ॥

परराष्ट्रभयं विनेति । स्वपक्षभेदे हि परचक्रभय विनापि दुर्गादिकं नश्यतीत्यर्थ

मत्स्यपुराणे[4]—

सर्वेषामप्युपायाना दान श्रेष्ठतम मतम् ।
[5]स्वदत्तेनेह भवति दानेनोभयलोकजित् ॥ ६७ ॥
यद्यप्यलुब्धा[6] गम्भीरा पुरुषा: सागरोपमा ।
न गृह्णन्ति तथाप्येते जायन्त पक्षपातिन ॥ ६८ ॥
न शक्या ये [7]वशीकर्तुमुपायत्रितयेन तु ।
दण्डेन तान् वशीकुर्याद् दण्डो हि वशकृत्तम.[8] ॥ ६९ ॥

श्रीरामायणे[9]—

तत्र साम प्रयोक्तव्यमार्येषु गुणवत्सु च ।

---

१ So Matsyapu, सङ्गता MS. २ So Matsyapu, दुदु सहा. MS ३. For the text beginning with महिषी and ending with पृथिवीक्षिताम् Matsyapu reads —"महिषीयुवराजाभ्यां तथा सेनापतेर्नृप । अमात्यमन्त्रिणां चैव राजपुत्रे तथैव । अन्त कोपो विनिर्दिष्टो दारुण: पृथिवीक्षिताम् ॥" ४. 221 1, 4, 225 1 ५ सु० for स्व० इति मु० मत्स्य० ६ ०लुब्ध for ०लुब्धा इति मु मत्स्य० ७ वशे कर्तु for वशीकर्तुं० इति मु० मत्स्य० ८ वशकृन्नृणाम् for वशकृत्तम इति मु० मत्स्य० ९ Not found in the extant Rāmāyaṇa

दानं लुब्धेषु भेदश्च शङ्कितेष्विति निश्चयः ॥ १०० ॥
दण्डस्तथैव पात्यश्च नित्यकालं दुरात्मसु ।

मनुः[१]—

साम्ना भेदेन दानेन समस्तैरुत[२] वा पृथक् ॥ १०१ ॥
विजेतुं प्रयतेतारीन्न युद्धेन कदाचन ।
अनित्यो विजयो यस्माद् दृश्यते युध्यमानयोः ।
पराजयश्च संग्रामे तस्माद् युद्धं विवर्जयेत् ॥ १०२ ॥

तथा—

त्रयाणामप्युपायानां पूर्वोक्तानां परिक्षये ।
तथा युध्येत सम्पन्नो[३] विजयेत रिपून् यथा ॥ १०३ ॥
संहतान् योधयेदल्पान् कामं विस्तारयेद् बहून् ।
सूच्या वज्रेण चैवेतान् व्यूहेन व्यूह्य योजयेत् ॥ १०४॥
युध्येत स्यन्दनाश्वेन समेऽनूपेऽम्भते द्विपैः[४] ।
वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥ १०५ ॥
कौरुक्षेत्रांश्च मात्स्यांश्च पाञ्चालांश्शूरसेनजान् ।
दीर्घांल्लघूंश्चैव नरान्नुमाग्नेकेषु[५] योजयेत् ॥ १०६ ॥
प्रहर्षयेद्बलं व्यूह्य भृशार्तांश्च[६] परीक्षयेत् ।
चेष्टाश्चैव विजानीयादरीन् योधयतामपि ॥ १०७ ॥

महाभारते—

राज्ञो नियोगाद् योद्धव्यं ब्राह्मणेन विशेषतः ॥ १०८ ॥

राज्ञोऽधिकमित्यनुवृत्तौ गौतमः[७]—

सङ्ग्रामे संस्थानमनिवृत्तिश्च ।

यमः—

क्षत्रियस्योरसि क्षत्रं पृष्ठे ब्रह्म प्रतिष्ठितम् ।

---

१. Supplied by the Editor; 7. 198--200; 7. 491-194.
२. ०त्य for रुत इति मु० मत्स्य० ३. संयत्तो for सम्पन्नो इति मु० मत्स्य०
४. For this line Manu reads स्यन्दनाश्वैः समं युध्येदनूपे नौद्विपैस्तथा
५. ०मानीकेषु for ०माग्नेकेषु इति मु० म० ६. तांश्च सम्यक् for भृशार्तांश्च इति मु० म० ७. 2. 1. 10. 16.

तस्मात्पृष्ट रणे रणोन्मा भवेद् ब्रह्मघातुक ॥१०६॥

मनु[1]

समोत्तमाधमै राजा त्वाहूत समरे परै[2]।
न निवर्तेत [3]सङ्ग्रामात्क्षत्रधर्ममनुस्मरन् ॥ ११०॥
आहवेषु मिथोऽन्योन्य जिघासन्तो महीक्षित ।
युध्यमाना पर शक्त्या स्वर्गं यान्त्यपराङ्मुखा ॥१११॥
न कूटैरायुधैर्हन्याद् युध्यमानो रणे रिपून् ।
न कर्णिभिर्नापि दिग्धैर्नाग्निर्ज्वलिततेजनै ॥ ११२॥

मिथ स्पर्धमाना इति शेष । दिग्धै =विषाक्तै ।

बौधायन[4]—

भीतमत्तोन्मत्तप्रमत्तविसन्नाहस्त्रीबालवृद्धब्राह्मणैर्न युध्येतान्यत्राततायिन ।

गौतम[5]—

न दोषो हिंसायामाहवे। अन्यत्र व्यश्वसारथ्यायुधकृ[6]ताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थूल[7]वृक्षारूढदूतगोब्राह्मणवादिभ्य ।

मनु[9]—

न च हन्यात्स्थलारूढ न क्लीब न कृताञ्जलिम्।
न मुक्तकेशमासीन[10] न तवास्मीति वादिनम् ॥ ११३॥
न सुप्त न विसन्नाह न नग्न न निरायुधम्।
नायुध्यमान पश्यन्त न परेण समागतम् ॥ ११४॥
नायुधव्यसनप्राप्त नार्त नातिपरीक्षितम् ।
न भीत न परावृत्त सता धर्ममनुस्मरन् ॥ ११५॥

देवल —

तृणाखादी परप्रेप्सुरलस शरणा गत ।
षण्ढ परार्दितो लिङ्गी स्थविर पतित शिशु

१ 7 87, 89, 90 २ पालयन्प्रजा for समरे परै इति मु० म० ३ ०त्क्षात्र धर्म० for त्क्षत्रधर्म० इति मु० म० ४ Baudhayana Dharmasūtra, edited by Cinnasvami, Benares, 1934, I 10 11 ५ 2 1 10. 17, 18 ६ So Gautama, ०प्रकृता० MS ७ ०स्थल० for ०स्थून० इति मु० गौतम० ८ The Pub ed of Gautama adds वि before रूढ ९ 7 91–93 १० मुक्तकश नासीन for मुक्तकशमासीन इति मु० मनु०

न धर्मयुद्धे हन्तव्या ज्ञेया योधैरनापदि ॥ ११६ ॥

याज्ञवल्क्य:[1]—

य आहवेषु वध्यन्ते[2] भूम्यर्थमपराङ्मुखाः ।
अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ ११७ ॥

देवल:—

प्रजार्थं क्षत्रियो युध्येत्स्वान् प्राणान् संपरित्यजेत् ।
अश्वमेधफलं कृत्स्नं निसर्गेणाधिगच्छति ॥ ११८ ॥
शस्त्रेण निहत: संख्ये द्विपद्भिरपराङ्मुख: ।
शक्रलोकमवाप्नोति स्ववीर्याद्विजितं शुभम् ॥ ११९ ॥
आहवेऽभिमुखं शूरं प्रहितानि द्विपद्वयैः ।
भिन्द्युर्यावन्ति शस्त्राणि तावन्तः क्रतवोऽस्य ते ॥१२०॥
क्षतेभ्य: प्रसृतं रक्तं क्षितिपांसुषु संस्पृशेत् ।
स देवलोके तावन्तं कालं तिष्ठति वै ध्रुवम् ॥ १२१ ॥

नास्ति राज्ञां समरतनुत्यागसदृशो धर्मः । गोब्राह्मणमित्रधनरक्षणार्थं मृतास्ते स्वर्गलोकभाजः ।

आपस्तम्ब :—

ब्राह्मणस्वान्यपजिगीषमाणाः प्रत्यानेतुमिच्छन् हन्यतेऽसौ साक्षाद् यज्ञधर्म इत्यर्थः ।

व्यास:—

ये हता निशितैः शस्त्रैः क्षत्रधर्मपरायणाः ।
ते गता ब्रह्मसदनं न मेऽत्रास्ति विचारणा ॥ १२२ ॥
न यज्ञैर्दक्षिणाभिर्वा न तपोभिर्न विद्यया ।
स्वर्गं यान्ति तथा मर्त्या यथा योधा रणे हताः ॥ १२३ ॥
न ह्यधर्मोऽस्ति पापीयान् क्षत्रियस्य पलायनात् ।
युद्धाद्धि धर्मः श्रेयान्वै पन्थाः स्वर्गस्य विद्यते ॥ १२४ ॥

याज्ञवल्क्य:[3]—

पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्तिनाम् ।
राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥ १२५ ॥

---

१. I. 321. २. So Yāñavalkya; युध्यन्ते MS. ३. I. 325.

मनुः[1]—

यस्तु भीतः परावृत्तः सङ्ग्रामे हन्यते परे. ।
भर्तुर्यद्दुष्कृतं किञ्चित्सर्वं तत्प्रतिपद्यते ॥ १२६ ॥
यदस्य[2] सुकृतं किञ्चिदमुत्रार्थमुपार्जितम् ।
भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ॥ १२७ ॥

पराशरः—

पतितं स्वामिनं युद्धे त्यक्त्वा यान्ति पराङ्मुखा. ।
ये तेषां पापबुद्धीनां ब्रह्महत्या पदे पदे ॥ १२८ ॥

आदित्यपुराणे—

संग्रामे प्रस्थितं भूपं भृत्यस्त्यजति य चयात ।
स तेन नृपदण्डेन मूढो नरकमृच्छति ॥ १२६ ॥
जित्वारिं भोगसम्प्राप्तिर्मृतस्य च परा गतिः ।
निष्कृतिः स्वामिपिण्डस्य नास्ति युद्धसमा गतिः ॥१३०॥
शूराणां यद्विनिर्याति रक्तमाघावतां क्वचित् ।
तेनैव सह पाप्मानं सर्वं त्यजति वै मुने ॥ १३१ ॥
तथा व्रणचिकित्सायां वेदनां सहते तु याम् ।[3]
ततो नास्त्यधिकं लोके तप परमदारुणम् ॥ १३२ ॥
मृतस्य नास्ति संस्कारो नाशौचं नोदकक्रिया ।
कर्तुमिच्छति यस्येह संग्रामादधिकं हि किम् ॥ १३३ ॥
वराप्सरःसहस्राणि शूरमायोधने हतम् ।
अभिद्रवन्ति कामार्ता मम भर्ता भविष्यति ॥ १३४ ॥
यः सहायान् परित्यज्य स्वस्थ सन् गन्तुमिच्छति ।
असून् हि तस्य कृन्तन्ति देवा शक्रपुरोगमा. ॥ १३५ ॥
शूरस्याग्रे यदा विप्र आर्त उत्क्रोशते भृशम् ।
नच त त्रायते पापाच्छूरो नरकभाग्भवेत् ॥ १३६ ॥
ब्राह्मणाना गवा चैव रक्षार्थं हन्यते यदि ।
स शूरो जीवित हित्वा इन्दुलोकं प्रपद्यते ॥ १३७ ॥

---

१. 7, 94, 95 २ यद्यास्य for यदस्य इति मु० म० ३. So RP. (P. 408). For this line the MS reads तथैव चिकित्सायाम् only.

तथा—

तोषयित्वा नृपं युद्धे राज्ञां [1]हृत्वाऽग्रतः स्थितम्[2] ।
जित्वा न हरति द्रव्यं स नरः स्वर्गमाश्रितः ॥ १३८ ॥
गृह्णाति यदि राष्ट्राणि यदा न हरते धनम् ।
यदि वध्येत तत्रैव स नरः स्वर्गमाश्रितः ॥ १३९ ॥

तथा—

प्रजार्थे निहता ये च राजानो धर्मतत्पराः ।
अग्निविद्युद्धता ये च सिंहव्याघ्रहता च ये ।
प्राप्नुवन्ति च ते सर्वे पुरीमैरावतीमिमाम् ॥ १४० ॥

मनुः[3]—

रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून् स्त्रियः[4] ।
सर्वद्रव्याणि कुप्यं च यो यज्जयति तस्य तत् ॥ १४१॥
राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः ।
राज्ञा च सर्वयोधेभ्यो दातव्यमपृथग्जितम् ॥ १४२ ॥

गौतमः[5]—

जेता लभेत सांग्रामिकं वित्तम् । वाहनं तु राज्ञः । [6]योधांश्चापृथग्जये । [7]यथार्ह भाजयेद्राजा ॥

मनुः[8]—

जित्वा सम्पूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान् ।
प्रदद्यात्परिहारांश्च ख्यापयेदभयानि च ॥ १४३ ॥
सर्वेषां तु विदित्वैषां सममेव चिकीर्षितम् ।
स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् ॥ १४४ ॥
प्रमाणानि च कुर्वीत तेषां धर्म्यान् यथोदितान् ।
रत्नैश्च पूजयेदेनं प्रधानपुरुषैः सह ॥ १४५ ॥
आदानमप्रियकरं दानं च प्रियकारकम् ।
अभीप्सितानामर्थानां काले युक्तं प्रशस्यते ॥ १४६ ॥

---

१. So RP; हृत्वा० MS २. So RP., स्थित: MS. ३. 7. 96. 97.
४. So Manu., स्त्रियम् MS. ५. 2. 1. 20-23. ६. उद्धारश्चापृ० for योधांश्चापृ० इति मु० गौतम० ७. The pub. ed. of Gautama adds यथार्ह before अधिकम्. ८. 7. 201-204.

राजग्राह्यमपि जनानुरागार्थं किञ्चिद्देशं परित्यजेदित्यर्थः । प्रमाणानीति । यस्मिन् देशे ये धर्मास्ते तथैव पालनीयाः । कालयुक्तमिति । अप्रियकरमपि कालापेक्षया प्रशस्यत इत्यर्थः ।

विष्णुः—

राजा परपुरमाप्तो तत्कुलीनमभिषिञ्चेत् । न राजकुलमुच्छिन्द्याद् अन्यत्राकुलीनराजकुलात् ।

कात्यायनः—

दुष्टस्यापि नरेन्द्रस्य तद्राष्ट्रं न विनाशयेत् ।
न प्रजानुमतो यस्मादन्यायेषु प्रशस्यते[1] ॥ १४७ ॥

याज्ञवल्क्यः[2]—

यस्मिन् देशे य आचारो व्यवहारः कुलस्थितः[3] ।
तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥ १४८ ॥

मनुः[4]—

सर्वं कर्मेदमायत्तं विधाने दैवमानुषे ।
तत्र "दैवमचिन्त्यं च[5] मानुषे विद्यते क्रिया ॥ १४९ ॥
"दैवमानुषसम्पन्ना यात्रा सर्वार्थसाधिका ।
तस्यामतिशये दैवं वर्तते पौरुषं समम् ॥ १५० ॥
केचित्पुरुषकारेण केचिद्दैवेन कर्मणा ।
उभाभ्यां पश्चिदिच्छन्ति फलं कुशलबुद्धयः ॥ १५१ ॥
दैवमानुषसद्भावे नार्या गर्भः प्रसिध्यति ।
पुंसां सत्यपि संयोगे दैवभावेन सिध्यति ॥ १५२ ॥
नहि दैवमुदासीनं कदाचिदपि मानवम् ।
अर्थानर्थफलेनेह संयुनक्त्यत्र कश्चित् ॥ १५३ ॥
काकतालीयवद्दैवाद् दृष्टापि निधिमप्यतः ।
न पौरुषादृते तेन विधिना युज्यते पुमान् ॥ १५४ ॥

---

१ प्रवर्तते for प्रशस्यते RP ( P 411 ) २ 1 343 ३ ०स्थिति for ०स्थित इति मु० याज्ञ० ४ 7 205 ५ तयोर्दैव० for तत्र दैव० इति मु० म० ६ तु for च इति मु० म० ७ The text of the verses 150 154, beginning with दैवमानुष० and ending with युज्यते पुमान् is not found in extant Manu

श्रीरामायणे—

यस्तु नारभते कार्यं नरो दैवपरायणः ।
क्षिप्रं भवति निर्द्रव्यः पलायनपरायणः ॥ १५५ ॥[1]

तथा—

विक्लवो हीनवीर्यो यः स दैवमनुवर्तते ।
अविक्लवस्तु तेजस्वी न दैवमनुवर्तते[2] ॥१५६॥
दैवं पुरुषकारेण यतते[3] यः प्रबाधितुम् ।
न स [4]दैवविपन्नार्थः [5]कदाचिदवसीदति ॥ १५७॥

मत्स्यपुराणे[6]—

दैवं पुरुषकारश्च कालश्च पुरुषोत्तम !
त्रयमेतन्मनुष्यस्य पिण्डितं [7]स्यात्फलाय वै ॥ १५८ ॥
कृषिवृष्टिसमायोगाद् दृश्यन्ते फलसिद्धयः ।
वर्षाकाले प्रशस्यन्ते[8] नैवाकाले कथञ्चन ॥ १५९ ॥

व्यासः—

विधिर्विधानं नियतिः स्वभावः
काला ग्रहा ईश्वरकर्म दैवम् ।
भाग्यानि पुण्यानि कृतान्तयोगः
पर्यायनामानि पुराकृतस्य ॥ १६० ॥
दैवमात्मकृतं विद्यात्कर्म यत्पौर्वदेहिकम् ।
स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ॥ १६१ ॥

मनुः[9]—

सह वाऽपि व्रजेद्युक्तः सन्धिं कृत्वा प्रयत्नतः ।
मित्रं हिरण्यं भूमिं वा संपश्यंस्त्रिविधं फलम् ॥ १६२ ॥

---

१. The verse beginning with यस्तु and ending with परायणः is not found in extant Rāmāyaṇa; Ayodhyākāṇḍa 23. 17, 18.
२. For this line Rāmāyaṇa reads धीराः सम्भावितात्मानो न दैवं पर्युपासते. ३. यः समर्थः for यतते यः इति मु० रा०. ४. दैवेन for स दैव इति मु० रा० ५. पुरुषः सोऽत्र for कदाचिदव० इति मु० रा० ६. Matsyapu. 221. 8, 9. ७. स्फलावहम् for स्फलाय वै इति मु० मत्स्य० ८. सास्तु काले प्रदृश्यन्ते for वर्षाकाले प्रदृश्यन्ते इति मु० मत्स्य० ९. 7. 205, 207,

पार्ष्णिग्राहं च सम्प्रेक्ष्य तथाक्रन्दं च मण्डले ।
मित्रादथाप्यमित्राद्वा यात्राफलमवाप्नुयात् ॥ १६३ ॥

विष्णु —

परेणाभियुक्तश्च सर्वात्मना राष्ट्रं गोपायेत् सर्वतश्चात्मानं गोपायेत् ।

मनु [1]—

क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि ।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥ १६४ ॥
आपदर्थं धनं रक्षेद्दारान् रक्षेद्धनैरपि ।
आत्मानं सततं[2] रक्षेद्दारैरपि धनैरपि ॥ १६५ ॥
सह सर्वाः समुत्पन्नाः प्रसमीक्ष्यापदो भृशम् ।
संयुक्तांश्च वियुक्तांश्च सर्वोपायान् सृजेद् बुधः[3] ॥ १६६ ॥
उपेतारमुपेयं च सर्वोपायांश्च कृत्स्नशः ।
एतत् त्रयं समाश्रित्य [4]प्रयतेतार्थसिद्धये ॥ १६७ ॥

## अथाभिषिक्तस्य कृत्यानि (१६)

तत्र मनु [5]—

इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियश्च[6] शक्नोति वशे स्थापयितुं प्रजाः ॥ १ ॥
दश कामसमुत्थानि तथाष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ॥ २ ॥
कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ ३ ॥
मृगयाऽक्षो दिवा स्वप्नः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ ४ ॥
पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयार्थदूषणम् ।
वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥ ५ ॥
द्वयोरप्येतयोर्मूलं यं पूर्वे[7] कवयो विदुः ।

---

१ 8 212 215 २ सततं for सर्वतो इति मु० म० ३ So Manu, जयेद् बुधः MS ४ ०तार्थ० for ०तात्म० इति मु० म० ५ 7 44-53 ६ जितेन्द्रियो हि for जितेन्द्रियश्च इति मु० म० ७ सर्वे for पूर्वे इति मु० म०

तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥ ६ ॥
पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत्कष्टतरं विद्याच्चतुष्कं कामजे गणे ॥ ७ ॥
दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥ ८ ॥
सप्तकस्यास्य वर्गस्य सर्वस्यैवानुषङ्गिणः ।
पूर्वं पूर्वं गुरुतरं विद्याद् व्यसनमात्मनः[1] ॥ ६ ॥
व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते ।
व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः ॥ १० ॥

महाभारते[2]—

पानमक्षास्तथा नार्यो मृगया गीतवादितम्[3] ।
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥ ११ ॥
यत्सुखं[4] सेवमानोऽपि धर्मार्थाभ्यां न हीयते ।
कामं तदुपसेवेत न मूढव्रतमाचरेत् ॥ १२ ॥
न कामपर एव स्यात् सर्वान् सेवेत सर्वदा ।
धर्मं पूर्वे धनं मध्ये जघन्ये काममाचरेत् ॥ १३ ॥
धर्मार्थौ यः समुत्सृज्य काममेवानुवर्तते ।
तस्माद्धर्मप्रधानेन सेव्योऽर्थः संयतात्मना ॥ १४ ॥
विश्वासयित्वा भूतानि साम्ना समुपरामयेत् ।
धर्मार्थकामसंयुक्तः सोऽमुत्रेह च नन्दति ॥ १५ ॥

तथा—

ऊपरेष्वपि वर्षन्तं पात्रेषु मृदुवर्षिणाम् ।
पर्जन्यमपि निन्दन्ति किं पुनर्वसुधाधिपम् ॥ १६ ॥
प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ॥ १७ ॥

विष्णुः—

आयद्वाराणि नोच्छिन्द्यान्नापात्रवर्षी स्यात् ।

---

१. ०मात्मवान् for ०मात्मनः इति मु० म०. २. S'ānti-parva 140. 26; Udyogaparva 39. 61; Vanaparva 33. 39c-d, 40a-b. ३. So Mahā ; वादिते MS. ४. So Mahā , यत्तु सं० MS.

आयद्वाराणि= द्रव्योत्पत्तिस्थानानि।

मत्स्यपुराणे[1]—

व्यसनानि च सर्वाणि भूपतिः परिवर्जयेत्।
लोकसंग्रहणार्थाय कृतकव्यसनी भवेत् ॥ १८ ॥
अर्थस्य दूषणं राजा द्विप्रकारं विवर्जयेत्।
अर्थानां दूषणं चैकं तथार्थेषु च[2] दूषणम् ॥ १९ ॥
प्राकाराणां[3] समुच्छेदाद् दुर्गादीनामसत्क्रिया।
अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च ॥ २० ॥
अदेशकाले यद्दानमपात्रे दानमेव च।
अर्थेस्तु दूषणं प्रोक्तमसत्कर्मप्रवर्तनम् ॥ २१ ॥
कामः क्रोधो मदो मानो लोभो हर्षस्तथैव च।
जेतव्यो रिपुषड्वर्ग आन्तरः[4] पृथिवीक्षिता ॥ २२ ॥
एतेषां विजयं कृत्वा कार्यो भृत्यजयस्तथा।
कृत्वा भृत्यजयं राजा [5]पौरजानपदान् जयेत् ॥ २३ ॥
कृत्वा च विजयं तेषां शत्रून् बाह्यांस्ततो जयेत्।
न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते ॥ २४ ॥
न भाव्यं दारुणेनापि[6] तीक्ष्णादुद्विजते जनः।
भृत्यैः सह महीपालः परिहासं विवर्जयेत्।
भृत्याः परिभवन्तीह नृपं हर्षुलसंकथम्[7] ॥ २५ ॥

मनुः[8]—

अहन्यहन्यवेक्षेत कर्मान्तान्वाहनानि च।
आयव्ययौ च नियतावाकरान्कोशमेव च ॥ २६ ॥

याज्ञवल्क्यः[9]—

धर्मेणालब्धमीहेत[10] लब्धं यत्नेन पालयेत्।

---

१. 219. 25c-d, 26a-b, 11-15, 16a-b, 22c d, 23a-b, 24c-d, 25a-b. २. So Matsyapu; तथैवार्थेन MS. ३. So Matsyapu; आकराणां MS. ४. एते वर्ज्याः प्रयत्नेन सादरं for जेतव्यो रिपुषड्वर्ग आन्तरः इति मु० मत्स्य० ५. पौरान् for पौर इति मु० मत्स्य० ६. ० ना ते for ०नापि इति मु० मत्स्य० ७. हर्षवशंगतम् for हर्षुलसंकथम् इति मु० मत्स्य० ८. 8. 419. ९. 1. 317. १०. अलब्धमीहेद्धर्मेण for धर्मेणालब्धमीहेत इति मु० याज्ञ०.

पालितं वर्धयेन्नित्यं वृद्धं पात्रेषु निक्षिपेत् ॥ २७ ॥

उशनाः[1]—

आदाने च विसर्गे च तथा प्रेषनिषेधयोः ।
पञ्चमे चाथ वचने व्यवहारस्य चेक्षणे ॥ २८ ॥
दण्डशुद्धौ सदा युक्त आत्मशुद्धौ तथैव च ।
अष्टकर्मा दिवं याति राजा शक्राभिपूजितः ॥ २९ ॥

महाभारते—

सदाधिगच्छेद्विनयं विनीतात्मा हि पार्थिवः ।
विनीतात्मा हि नृपतिर्न कचित्परिभूयते ॥ ३० ॥
न राज्यं प्राप्तमित्येव वर्तितव्यमसाम्प्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ ३१ ॥[2]
ब्राह्मं प्राप्तेन संस्कारं क्षत्त्रियेण यथाविधि ।
विद्यानां ग्रहणं कार्यं यथाविधि नराधिप ! ॥ ३२ ॥
त्रैविद्येभ्यस्त्रयीविद्यां दण्डनीतिं प्रयोक्तृतः ।
आन्वीक्षिकीं तर्कविद्यां वार्तारम्भांश्च लोकतः ॥ ३३ ॥
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे कचित् ॥ ३४ ॥
अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ ३५ ॥
धनुर्वेदेतिहासे च यत्नः कार्यो विजानता ।
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव हि ॥ ३६ ॥
द्वौ भागावितिहासार्थे भागस्त्र्या विधीयते ।
इष्वस्त्रादिषु भागोऽन्यश्चतुर्थैवमहः स्मृतम् ॥ ३७ ॥
येषां त्रीण्यवदातानि योनिर्विद्या च कर्म च ।
तान् सेवेत् तैः समास्या[3] हि शास्त्रेभ्योऽपि गरीयसी ॥ ३८ ॥
गुरुपूजां च सततं वृद्धानां पर्युपासनम् ।
श्रवणं चैव विद्यानां कुर्वन् श्रेयोऽधिगच्छति ॥ ३९ ॥

---

१. The following verses ascribed to Us'anas are not found in extant S'ukraniti २. Udyogaparva 34. 12. ३. RP. (P. 132) explains समास्या as सम्यक् प्रकारेण आस्या उपवेशनम्.

न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य वा[1] ।
धर्मार्थौ वेदितु शक्यौ बृहस्पतिसमैरपि ॥ ४० ॥
विद्यावृद्धान् [2]सदैव त्वमुपासीथा नराधिप ।
शृणुया यच्च ते ब्रूयु कुर्याश्चैवाविचारयन्[3] ॥ ४१ ॥[2]
सहस्रमपि मूर्खाणा यद्युपास्ते महीपति ।
अथ वाप्ययुतान्येव नास्ति तेषु सहायता ॥ ४२ ॥
एकोऽपि शास्त्रवित्प्राज्ञो गुरुत्या पर्युपासिता ।
राजान राजपुत्र वा प्रापयेन्महतीं श्रियम् ॥ ४३ ॥
सदैव हितकामानां सुहृदा न शृणोति य ।[4]
प्राज्ञाना कृतविद्यानां स नर शत्रुनन्दन ॥ ४४ ॥[5]
आदावेव मनुष्येण वर्तितव्य यथाक्रमम् ।
यथा नातीतमर्थं वै पश्चात्तापेन शोचति ॥ ४५ ॥
अर्थानामीश्वरो य स्यादिन्द्रियाणामनीश्वर ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यतीह[6] स ॥ ४६ ॥[7]
सन्नियच्छति यो वेगमुत्थित कामदर्पयो ।
स श्रियो भाजन राजन् ! पश्चाद् यस्तु न मुह्यति ॥ ४७ ॥
नात्रमान्या बुद्धिमद्भिरवरोत्कृष्टमध्यमा ।
न हि मानप्रदग्धाना कश्चिदस्ति मद क्वचित् ॥ ४८ ॥
अवृत्तेर्भयमन्त्याना मध्याना मरणाद्भयम् ।
उत्तमानां तु मर्त्यानामवमानात्पर भयम् ॥ ४९ ॥
कर्मणा[8] मनसा वाचा चक्षुपा[9] च चतुर्विधम् ।
प्रसादयति यो लोक त लोकोऽनुप्रसीदति[10] ॥ ५० ॥

१ So Maha, च MS २ The portion beginning with सदैव and ending with ०विचारयन् *is supplied by the editor from* Maha ३ Udyoga 39 40 c d, 41 a b ४ For this line Maha reads सुहृदामर्थकामाना यो न तिष्ठति शासने ५ Udyoga 129 39 ६ ०ते हि स for ०तीह स इति मु० महा० ७. Udyoga 34 63 ८ चक्षुपा for कर्मणा इति मु० महा० ९ कर्मणा for चक्षुपा इति मु० महा० १० Udyoga 34 25,

योनोद्धतं जातु[1] करोति[1] वेषं
न पौरुषेणापि विकत्थते च[2] ।
नीत्या हि[3] किञ्चित्त्वमते विवादं
सर्वत्र तादृक् लभते प्रशंसाम् ॥ ५१ ॥[4]

राज्ञोऽधिकमित्यनुवृत्तौ गौतमः[5]—

योगश्च विजये । भये विशेषेण । चर्या च रथधनुर्भ्याम् ॥ योग उद्योगः । विजये आत्मेन्द्रियामात्यादीनां वशीकारेऽभियोगः कार्यः । भये विशेषेण अन्येनाभिभवे उपस्थिते तद्रक्षणार्थं विशेषेणोद्यमः कर्तव्यः । चर्या=पर्यटनम् । तद्वाहनायुधवता कर्तव्यमित्यर्थः ।

मनुः[6]—

नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ।
नित्यं संवृतसंवार्यो नित्यं छिद्रानुसार्यरेः ॥ ५२ ॥

नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत् ।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥ ५३ ॥

अमाययैव वर्तेत न कथञ्चन मायया ।
बुध्येतारिप्रयुक्तां च मायां नित्यं [7]सुसंवृतः ॥ ५४ ॥

नास्य छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ ५५ ॥

बकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत ।
तीक्ष्णश्चैव मृदुश्च स्यात् ॥ ५६ ॥

विषघ्नागदमन्त्रधारी च नापरीक्षितमुपयुञ्ज्यात्, स्मितपूर्वाभिभाषी स्याद्वध्येष्वपि न भृकुटिमाचरेत् । अगद औषधम् ।

---

१. कुरुते जातु for जातु करोति इति मु०महा०. २. ऽन्याय for च इति मु०महा०. ३. नीत्या हि for नात्याद् RP. ४. Udyoga. 33. 111 a-b, 110 c-d. ५. 2. 1. 10. 13, 14, 15. ६. 7. 102—106, 7. 140a. ७. So Manu; स्व० MS.

10916

मत्स्यपुराणे[1]—

शौटीरस्य[2] नरेन्द्रस्य नित्यमुद्विग्नचेतसः ।
जना [3]उद्वेगमायान्ति सदा दुःखविभाविताः ॥ ५७ ॥
अदीर्घसूत्रश्च भवेत्सर्वकर्मसु पार्थिवः ।
दीर्घसूत्रस्य नृपतेः कर्महानिर्ध्रुवं भवेत् ॥ ५८ ॥
रागे दर्पे च माने च क्रोधे पापे च कर्मणि ।
अप्रिये चैव कर्तव्ये दीर्घसूत्रः प्रशस्यते ॥ ५९ ॥
न रोहेत्कुञ्जरं व्यालं नादान्तं तुरगं तथा ।
नाविज्ञातां स्त्रियं गच्छेन्नैव देवोत्सवे वसेत् ॥ ६० ॥

शङ्खलिखितौ—[4]

राजा स्वाधीनवृत्तिरात्मप्रत्ययकोश स्वयं कृत्यानुदर्शी विप्रस्वनिवृत्तश्चिरं भद्राणि पश्यति ।

यमः—

याचितो नेति न ब्रूयाद्दीक्षितो नानृतं वदेत् ।
सङ्ग्रामे न निवर्तेत तं देवाः क्षत्रियं विदुः ॥ ६१ ॥
दाता यज्वा च शूरश्च देवद्विजपरायणः ।
समः सर्वेषु भूतेषु चिरं पालयते महीम् ॥ ६२ ॥

मार्कण्डेयपुराणे—

अहो तितिक्षामाहात्म्यमहो दानफलं महत् ।
पदार्थं गतो हरिश्चन्द्रः पुरश्चेन्द्रत्वमागतः ॥ ६३ ॥
अन्तर्दोषं समुत्पन्नमाकारेणोपलक्षयेत् ।
शङ्क्येषु शङ्कितो नित्यं रक्षेच्छक्तया सदोत्थितः ॥ ६४ ॥
पापानां निग्रहं कुर्यात्साधूनां परिपालनम् ।
यथाक्रमं च वृद्धानां काले काले निषेवनम् ॥ ६५ ॥

शङ्खलिखितौ—[5]

स्वपक्षे परपक्षे च स्थानवृद्धिक्षयाश्रयः ।

---

१ 220 26c d, 27a b, 29c d, 30a b, 30 c d, 31a b, the verse no. 60 is not found in the extant Matsyapu. २. शौण्डीरस्य for शौटीरस्य इति मु० मत्स्य० ३ विराग० for उद्वेग० इति मु० मत्स्य० ४. दु:खेनभावतः for दु:खविभाविताः इति मु० मत्स्य०. ५. P. 38,

10916

स्थानादीनां विभागश्च काले द्रव्यार्थसङ्ग्रहः ॥ ६६ ॥

मनुः[1]—

सङ्ग्रामेष्वनिवर्त्तित्वं प्रजानां [2]परिपालनम् ।
[3]ब्राह्मणानां च शुश्रूषा[3] राज्ञः श्रेयस्करं[4] परम् ॥ ६७ ॥

नारदः[5]—

सतामनुग्रहो नित्यमसतां निग्रहस्तथा ।
एष धर्मः स्मृतो राज्ञामर्थश्चापि भवेत्ततः[6] ॥ ६८ ॥
तस्य वृत्तिः[7] प्रजारक्षा वृद्धप्राज्ञोपसेवनम् ।
दर्शनं व्यवहाराणामात्मनश्चाभिरक्षणम्[8] ॥ ६९ ॥

यमः

समः सर्वेषु भूतेषु नयानयविशारदः ।
नैकः कार्याणि यः कुर्यात्सोऽत्यन्तं पाति मेदिनीम् ॥ ७० ॥

तथा

पर्जन्यमिव भूतानि महाद्रुममिवाण्डजाः ।
भृत्या यमुपजीवन्ति स राजा शक्रलोकभाक् ॥ ७१ ॥

कात्यायनः—

गच्छेत्सम्यगविज्ञाय वशं क्रोधस्य यो नृपः ।
वसेत्स नरके घोरे कल्पार्धं तु न संशयः ॥ ७२ ॥

ब्रह्मपुराणे—

नित्यं राज्ञा समुत्थाय पूजनीयाः सुरद्विजाः ।
वह्निसम्पूजनं कार्यं द्रष्टव्यं चन्दनं घृतम् ॥
श्रोतव्ये तिथिनक्षत्रे कर्तव्यं दैवभाषितम् ॥ ७३ ॥

शङ्खलिखितौ[9]—

राज्ञः प्रत्यहं घृतान्वीक्षणं मङ्गलदर्शनं कपिलाप्रदानं स्वलङ्कृतस्य सम्भाषणं वैद्यदर्शनम् । सप्रहासं सविकल्पं विनयपूर्वं वृद्धेषु ।

---

१. 7. 88. २. चैव for परि इति मु० म०. ३. शुश्रूषा ब्राह्मणानां च for ब्राह्मणानां च शुश्रूषा इति मु० म० ४. राज्ञः श्रेयस्करं परम् for राज्ञो निश्रेयसः परम् इति मु० म०. ५. 17 17, 33. ६. श्चामित्रपीडनात् for ०श्चापि भवेत्ततः इति मु० ना० ७. धर्मः for वृत्तिः इति मु० ना०. ८. ०मुत्थानं च स्वकर्मसु for ०मात्मनश्चाभिरक्षणम् इति मु० ना०. ९. P. 38.

याज्ञवल्क्यः[१]—

ऋत्विक् पुरोहिताचार्यैराशीर्भिरभिनन्दितः ।
दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद्गां काञ्चनं महीम् ॥
नैवेशिकानि च ततः[२] श्रोत्रियेभ्यो[३] गृहाणि च ॥ ७४ ॥

सभामित्यनुवृत्तौ बृहस्पतिः—

पूर्वाह्णे तामधिष्ठाय वृद्धामात्यानुजीविनः ।
पश्येत्पुरान्स धर्मार्थशास्त्राणि शृणुयात्तथा ॥ ७५ ॥

मनुः[४]—

स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः ।
वर्णानामाश्रमाणां च राजा सृष्टो हि[५] रक्षिता ॥ ७६ ॥
तेन यद्यत्सभृत्येन कर्तव्यं रक्षता प्रजाः ।
तत्तद्वोऽहं प्रवक्ष्यामि यथावदनुपूर्वशः ॥ ७७ ॥
ब्राह्मणान् पर्युपासीत प्रातरुत्थाय पार्थिवः ।
त्रैविद्यवृद्धान् विदुषस्तिष्ठेत्तेषां च शासने ॥ ७८ ॥
वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन् ।
वृद्धसेवी च सततं रक्षोभिरपि पूज्यते ॥ ७९ ॥
तेभ्योऽधिगच्छेद्विनयं विनीतात्मापि नित्यशः ।
विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित् ॥ ८० ॥
बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः ।
वनस्थाश्चैव[६] राज्यानि विनयात्प्रतिपेदिरे ॥ ८१ ॥
वेनो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः ।
सुदाः पैजवनश्चैव सुमुखो निमिरेव च ॥ ८२ ॥
पृथुस्च[७] विनयाद्राज्यं प्राप्तवान्मनुरेव च ।
कुबेरश्च धनैश्वर्यं ब्राह्मण्यं चैव गाधिजः ॥ ८३ ॥
त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च सर्वतः[८] ॥ ८४ ॥

---

१. 1. 332c d. २. So Yājñavalkya; तथा MS. ३. श्रोत्रियेभ्यो For श्रोत्रियाणाम् इति मु० याज्ञ० ४. 7. 35-43 ५. मि० for हि इति मु० म० ६. अपि for ०श्चैव इति मु० म०. ७ ०स्तु for ०श्च इति मु० म० ८. लोकतः for सर्वतः इति मु० म०.

याज्ञवल्क्यः[1]—

कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम्।
व्यवहारांस्ततो दृष्ट्वा स्नात्वा[2] भुञ्जीत कामतः॥ ८५॥

मनुः[3]—

एवं सर्वमिदं राजा सह सम्मन्त्र्य मन्त्रिभिः।
व्यायम्याप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं व्रजेत्[4]॥ ८६॥
तत्रात्मभूतैः कालज्ञैराहार्यैः परिचारकैः।
सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः॥ ८७॥
विषघ्नैरुदकैश्चास्य[5] सर्वद्रव्याणि नेजयेत्[6]।
विषघ्नानि च रत्नानि नियतो धारयेत्सदा॥ ८८॥
परीक्षिताः स्त्रियश्चैनं [7]व्यजनोदकधूपनैः।
वेषाभरणसंयुक्ताः[8] संस्पृशेयुः[9] समाहिताः[9]॥ ८९॥
एवं प्रयत्नं कुर्वीत यानशय्यासनाशने।
स्नाने प्रसाधने चैव सर्वालङ्कारकारिषु[10]॥ ९०॥

मत्स्यपुराणे[11]—

विषाद्रक्ष्यो नृपतिस्तत्र युक्तिं निबोध मे।
क्रीडानिमित्तं नृपतिर्धारयेन्मृगपक्षिणः।
अन्नं वै प्राक् परीक्षेत वह्नौ चान्यतरेषु[12] च॥ ९१॥
वस्त्रं [13]पुष्पमलङ्कारं भोजनाच्छादनं तथा।
नापरीक्षितपूर्वं तु स्पृशेदपि महीपतिः॥ ९२॥
श्यावास्यचक्रः[14] सन्तप्तः सोद्वेगं च निरीक्षते।

श्यावास्यचक्रः=ईषत्कृष्णश्वेतमुखमण्डलः।

---

१. 1. 327. २. So Yājñavalkya; श्रुत्वा MS. ३. 8. 216—220. ४. विशेत् for व्रजेत् इति मु० म०. ५. ०रगदै० for ०रुदकै० इति मु० म०. ६. योजयेत् for नेजयेत् इति मु० म०. ७. So Manu; ०व्यञ्जनो० MS. ८. ०संशुद्धाः for ०संयुक्ताः इति मु० म०. ९. स्पृशेयुः सुसमाहिताः for संस्पृशेयुः समाहिताः इति मु० म०. १०. ०केषु च for ०कारिषु इति मु० म०. ११. 219. 80c-d—32c-d, 33, 34 १२. So Matsyapu; ०तमेषु च MS. १३. So Matsyapu. पत्र० for पुष्प० MS. १४. So Matsyapu; श्यावासौ वक्त्र-सन्तप्तः MS.

विपदोऽपि[1] विषं दत्वा[2] यत्र तत्र निरीक्षते[3] ॥ ९३ ॥
स्रस्तोत्तरीयो विमनाः स्तम्भकुड्यादिभिस्तथा ।
प्रच्छादयति चाऽऽत्मानं लज्जते[4] स्खलति[5] तथा ॥९४॥
भुवं विलिखति ग्रीवां तथा चालयते द्विजः[6] ।
कण्डूयति च मूर्धानं परिलह्यो नरः सदा[7] ॥ ९५ ॥
क्रियासु त्वरितो राजन्! विपरीतास्वपि ध्रुवम्।
एवमादीनि चिह्नानि विपदस्य परीक्षयेत् ॥ ९६ ॥
समीपे विक्षिपेद्वह्नौ[8] तदन्नं त्वरयाऽन्वितः ।
इन्द्रायुधसवर्णोऽग्नी[9] रूक्षः[10] स्फोटसमन्वितः[11] ॥९७॥
एकवर्णोऽस्य[12] दुर्गन्धिर्भृशं[13] चटचटायते ।
तद्धूमदर्शनाज्जन्तोः[14] शिरोरोगश्च जायते ॥ ९८ ॥
सविषेऽन्ने निलीयन्ते[15] नच पार्थिव! मक्षिका ।
निलीनाश्च[16] विपद्यन्ते संस्पृष्टे[17] सविषे तथा ॥ ९९ ॥
विरज्यति चकोरस्य दृष्टिः पार्थिवसत्तम !
विकृतिं च स्वरो याति कोकिलस्य तथा नृप! ॥१००॥
गतिः स्खलति हंसस्य भृङ्गराजश्च कूजति ।
क्रौञ्चो मदमथाभ्येति कृकवाकुर्विरौति च ! ॥१०१॥
विक्रोशति शुको राजन्! सारिका वाशते तथा[18]।
चामीकरोऽन्यतो[19] याति मृत्यु कारण्डवस्तथा ॥१०२॥

---

१. So Matsyapu.; ०थ MS २. So Matsya., दत्तं MS. ३. परी० for ०निरी० इति मु० मत्स्य०. ४. So Matsya ; लज्जति MS. ५ त्वरते for स्खलति इति मु० मत्स्य० ६ नृपः for द्विज. इति मु० मत्स्य० ७. परिलोड्याननं तथा for परिलह्यो नरः सदा इति मु० मत्स्य० ८ ततो विचारयेदग्नौ for समीपे विक्षिपेद्वह्नौ इति मु० मत्स्य० ९ ०वर्णो तु for ०वर्णोऽग्नी इति मु० मत्स्य० १०. रूक्षं for रुक्ष. इति मु० मत्स्य० ११. ०न्वितं for ०न्वित. इति मु० मत्स्य० १२. ०वर्णो तु for ०वर्णोऽस्य इति मु० मत्स्य० १३ ०न्धि० for ०न्धिर् इति मु० मत्स्य० १४. ०सेवना० for ०दर्शना० इति मु० मत्स्य० १५ वि० for नि इति मु० मत्स्य० १६. विभीताश्च for निलीनाश्च इति मु० मत्स्य० १७. So Matsyapu.; दृष्टे च MS. १८. वमते नत. for वाशते तथा इति मु० मत्स्य० १९. So Matsyapu., वामी० MS.

मेहते वानरो राजन्! ग्लायते! जीवजीवकः।
हृष्टरोमा भवेद् बभ्रुः प्रपतश्चैव रोदिति ॥१०३॥
हर्षमायाति च शिखी विपसन्दर्शनान्नृप !
अन्नं च सविषं राजंश्चिरेण च विपच्यते[1] ॥१०४॥
तथा भवति सास्रावं[2] पक्वं[3] पर्युषितोपमम्।
व्यापन्नरसगन्धं च चन्द्रिकाभिस्तथा युतम् ॥१०५॥
व्यञ्जनानां च शुष्कत्वं द्रवाणां बुद्बुदोद्भवः।
ससैन्धवानां द्रव्याणां जायते फेनमालिका[4] ॥१०६॥
रसस्य[5] राजिस्ताम्रा स्यान्नीला च पयसस्तथा।
कोकिलाभा च मद्यस्य तोयस्य च नृपोत्तम! ॥१०७॥
धान्याम्लस्य[6] तथा कृष्णा कपिला कोद्रवस्य च।
मधुश्यावा[7] च तक्रस्य नीला[8] पीता तथैव च ॥१०८॥
घृतस्योलूकसंकाशा[9] कपोताभा च मस्तुनः।
हरिता माक्षिकस्यापि तैलस्य च तथारुणा ॥१०९॥
फलानामप्यपक्वानां पाकः क्षिप्रं प्रजायते।
प्रक्लेदश्चैव[10] पक्वानां माल्यानां म्लानता तथा ॥११०॥
मृदुता कठिनानां स्यान्मृदूनां च विपर्ययः।
श्याममण्डलता चैव वस्त्राणां च विशेषतः[11] ॥१११॥
सूक्ष्माणां रूपदलनं तथा चैवातिरङ्गता[12]।
लोहानां च मणीनां च मलपङ्कोपदिग्धता ॥११२॥
अनुलेपनगन्धानां माल्यानां[13] च नृपोत्तम!

---

१. विपद्यते for विपच्यते इति मु० मत्स्य०. २. निःश्राव्यं for सास्रावं इति मु० मत्स्य० ३. पक्व for पक्वं इति मु० मत्स्य० ४. ०मालिता for ०मालिका इति मु० मत्स्य० ५ सस्यराजिश्च ता० for रसस्य राजिस्ता० इति मु० मत्स्य० ६. So Matsypu., धान्यान्न० MS. ७. ०श्यामा for ०श्यावा इति मु० मत्स्य० ८. नीला० for नील० इति मु० मत्स्य० ९. ०स्योद्रूक० for ०स्योलूक० इति मु० मत्स्य० १०. प्रक्षोभ० for प्रक्लेद० इति मु० मत्स्य० ११. धं तथैव च for च विशेषतः इति मु० मत्स्य० १२. So Matsyapu.; सूक्ष्मनन्तूपसदनं तथा चैवातिरोगता MS. १३. So Matsyapu., नाना च MS.

विगन्धता च विज्ञेया पर्णानां[1] म्लानता तथा।
एवमादीनि चिह्नानि विज्ञेयानि नृपोत्तम ॥११३॥
तस्माद्राजा सदा तिष्ठेन्मणिमन्त्रौषधागदैः ।
उक्तैः सरक्षितो राजा प्रमादपरिवर्जकः ॥११४॥
प्रजातरोर्मूलमिहावनीश-
स्तद्रक्षणाद् वृद्धिमुपैति[2] राज्यम्[3] ।
तस्मात्प्रयत्नेन नृपस्य रक्षा
सर्वेण कार्या रविवंशचन्द्र ॥११५॥

मनु —[4]

भुक्तवान् विहरेच्चैव स्त्रीभिरन्तःपुरे[5] सह ।
विहृत्य च यथाकालं पुनः कार्याणि चिन्तयेत् ॥११६॥
अलङ्कृतस्तथा[6] पश्येदायुधीयं पुनः पुनः[7]।
वाहनानि च सर्वाणि वस्त्राण्याभरणानि[8] च ॥११७॥

याज्ञवल्क्य —[9]

हिरण्यं व्यापृतानीतं भाण्डागारेन्यसेत्ततः[10] ।
पश्येच्चारांस्तथा[11] दूतान् प्रेषयेन्मन्त्रिसङ्गतः ॥११८॥
ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः ।
बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ॥११९॥
सन्ध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ।
गीतनृत्ये[12] च युञ्जीत पठेत्स्वाध्यायमेव च ॥१२०॥

मनु —[13]

सन्ध्यामुपास्य[14] शृणुयादन्तर्वेश्मनि शस्त्रभृत् ।
रहस्याख्यायिनां चैव प्रणिधीनां च चेष्टितम् ॥१२१॥

---

१ वर्णानां for पर्णानां इति मु० मत्स्य० २ ०राष्ट्र० for ०वृद्धि० इति मु० मत्स्य० ३ वृद्धिम् for राज्यम् इति मु० मत्स्य० ४ 8 221, 222 ५ So Manu, ०पुरे MS ६ ०तश्च सम्पश्येदा० for ०तस्तथा पश्येदा० इति मु० म० ७ जनम् for पुनः इति मु० म० ८ शस्त्रा० for वस्त्रा० इति मु० म० ९. 1 328-330 १० ०गारेषु निक्षिपेत् for ०गारे न्यसेत्ततः इति मु० याज्ञ० ११ ०स्ततो for ०स्तथा इति मु० याज्ञ० १२ ०नृत्यैश्च for ०नृत्ये च इति मु० याज्ञ० १३ 8 223-225 १४ सन्ध्यां चोपास्य for सन्ध्यामुपास्य इति मु० म०

गत्वा कक्षान्तरं त्वन्यत्समनुज्ञाप्य तं जनम् ।
प्रविशेद्भोजनार्थं तु[१] स्त्रीवृतोऽन्तःपुरं[२] पुनः ॥१२२॥
तत्र भुक्त्वा पुनः किञ्चित्तूर्यघोषैः प्रहर्षितः ।
संविशेत्तु[३] यथाकालमुत्तिष्ठेच्च गतक्लमः ॥१२३॥

शङ्खलिखितौ[४]—

राज्ञः शङ्खपटहतूर्येण प्रस्वापोत्थानम् ।

याज्ञवल्क्यः[५]—

संविशेत्तूर्यघोषेण प्रतिबुध्येत्तथैव च ।
शास्त्राणि चिन्तयेद् बुद्ध्या[६] सर्वकर्तव्यतास्तथा ॥१२४॥
प्रेषयेच्च[७] ततश्चारान् स्वेष्वन्येषु च सादरम्[८] ।

स्वेषु=स्वसामन्तादिषु । अन्येषु=महीपतिषु ।

मनुः[९]—

एतद् वृत्तं समातिष्ठेदरोगः पृथिवीपतिः ।
अस्वस्थः सर्वमेवैतन्मन्त्रिमुख्ये[१०] निवेशयेत्[११] ॥१२५॥

कात्यायनः—

शौर्यविद्यार्थबाहुल्यात्प्रभुत्वाच्च विशेषतः ।
सदा चित्तं नरेन्द्राणां मोहमायाति कारणात् ॥१२६॥
तस्माच्चित्तं प्रबोद्धव्यं राजधर्मे सदा द्विजैः ।
पवित्रं परमं पुण्यं स्मृतिवाक्यं न लङ्घयेत् ॥१२७॥

विष्णुः—

राजा सर्वेषु कार्येषु सांवत्सरिकाधीनः स्यात् । तथा शान्तिस्वस्त्ययनैर्दैवोपघातान् प्रशमयेत् परचक्रोपघातांश्च शस्त्रनित्यतया वेदेतिहासधर्मशास्त्रकुशलं कुलीनमव्यङ्गं तपस्विनं च पुरोहितम् ।

शस्त्रनित्यतया=शस्त्राभ्यासपरत्वेन ।

---

१. च for तु इति मु० म०. २ So Manu., ०वृत्तो० for वृत MS. ३. So Manu.; च MS. ४. S'L. P. 38. ५. I. 331, 332. ६. So Yājnavalkya, ०द्बुध्वा MS. ७. So Yājñavalkya, प्रेषयेत MS. ८. सादरान् for सादरम् इति मु० याज्ञ०. ९. 7. 226. १०. एतद्विधानमातिष्ठेद० for एतद्वृत्तं समातिष्ठेद० इति मु० म०. ११. सर्वमेतत्तु भृत्येषु विनियोजयेत् for सर्वमेवैतन्मन्त्रिमुख्ये निवेशयेत् इति मु० म०.

गौतमः—[1]

ब्राह्मणं च पुरोदधीत । विद्याभिजनवाग्रूपवयःशीलसम्पन्नं न्यायवृत्तं तपस्विनम् । तत्प्रसूतः कर्माणि कुर्वीत । ब्रह्मप्रसूतं हि क्षत्रमृध्यते न व्यथत इति च विज्ञायते । यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत् । तदधीनमप्येके योगक्षेमं प्रतिजानते । शान्तिपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि[2] विद्वेषणसंवननाभिचारद्विषद्व्यृद्धियुक्तानि[3] च शालाग्नौ कुर्यात् । यथोक्तमृत्विजोऽन्यानि ॥

तत्प्रसूतः=तदनुज्ञातः । संवननम्=वशीकरणम् । द्विषद्व्यृद्धिः=शत्रूणामृद्धयभावः ।

ब्रह्मपुराणे—

द्वौ लक्षहोमौ कुर्वीत तथा संवत्सरं प्रति ।
एकं च कोटिहोमं च यत्नात्सर्वाभयप्रदम् ॥१२८॥
अथर्ववेदविधिना समन्त्री सपुरोहितः ।
नित्यान्याहार्यकाम्यानि तथा नैमित्तिकानि च ॥१२९॥
ग्रहणे सूर्यशशिनोर्भूकम्पोत्पातदर्शने ।
तत्क्षणे च महाशान्तिः कर्तव्यानिष्टनाशनी ॥१३०॥

याज्ञवल्क्य.[4]—

पुरोहितं च[5] कुर्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥१३१॥

महाभारते—

पुरोहितप्रधानो हि राजा हितमवाप्नुयात् ।
सदाऽऽचरति यो धर्मं नृपो ब्राह्मणदेशितम् ॥१३२॥
तावता स कृतप्रज्ञश्चिर यशसि तिष्ठति ।
तस्य धर्मस्य सिद्धस्य भागी राज्ञः पुरोहितः ॥१३३॥

याज्ञवल्क्यः[6]—

श्रौतस्मार्तक्रियाहेतोर्वृणुयादृत्विजस्तथा[7] ।

---

१. 2. 2 11 12-17 २ ०युष्मन्म० for ०युष्य म० इति मु० गौ० ३ So Gautama; ०द्वृद्धि० MS ४. 1 313 ५ प्र० for च इति मु० याज्ञ०. ६. I. 314, 315 ७. ०देव चर्त्विजः for ०दृत्विजस्तथा इति मु० याज्ञ०

यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ॥१३४॥
भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च ।
अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम् ॥१३५॥

मनुः[1]—

आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवेत् ।
नृपाणामक्षयो[2] ह्येष निधिर्ब्राह्मो विधीयते[3] ॥१३६॥
न तं स्तेना न चामित्रा हरन्ति न च नश्यति ।
तस्माद्राज्ञा निधातव्यो[4] ब्राह्मणेष्वक्षयो निधिः ॥१३७॥
न स्कन्दते न व्यथते न विनश्यति कर्हिचित् ।
वरिष्ठमग्निहोत्राद्धि[5] ब्राह्मणस्य मुखे हुतम् ॥१३८॥

कात्यायनः—

अक्लेशेनार्थिने यस्तु राजा सम्यङ् निवेदयेत् ।
तत्रारमत्यनन्तं स्याद्धर्मार्थे दानमीदृशम् ॥१३९॥
न्यायेनाक्रम्य यल्लुब्धं रिपुं निर्जित्य पार्थिवैः ।
तच्छुद्धं तत्प्रदेयं च नान्यथोपहृतं क्वचित् ॥१४०॥

राजधर्मेषु विष्णुः—परदत्तां च भुवं नापहरेद् ब्राह्मणेभ्यः ।

राजधर्मेष्वापस्तम्बः—भृत्यानामनुरोधेन क्षेत्रं वित्तं च ददद् ब्राह्मणेभ्यो यथार्हमनन्तांल्लोकान् जयति ।

कात्यायनः—

वेदध्वनिप्रभावेन देवाः स्वर्गनिवासिनः ।
तेऽपि तत्र प्रमोदन्ते तृप्तास्तु द्विजपूजनात् ॥१४१॥
तस्माद्यत्नेन कर्तव्या द्विजपूजा सदा नृपैः ।
तेन भूयोऽपि शक्रत्वं नरेन्द्रत्वं पुनः पुनः ॥१४२॥

राजेत्यनुवृत्तौ शङ्खलिखितौ[6]—

दद्याद्दानमर्चयित्वा ब्राह्मणाय । निमित्तपूर्वं शेषेभ्यः । कृपयातुरानाथव्यङ्गविधवाबालवृद्धानौषधावसथाशनाच्छादनैर्बिभृयात् ।

---

१. 7. 82-84. २. So Manu, विरागा० MS. ३. ०ऽभि for वि० इति मु० म०. ४. So Manu.; विरातव्यो MS. ५. ०होत्रेभ्यो for ०होत्राद्धि इति मु० म० ६. P. 38.

वसिष्ठः- राजनि च दद्यात्प्रेते प्रासङ्गिकमनेन मातापितृवृत्तिर्व्याख्याता । राजमहिषीपितृव्यमातुलान् राजा विभृयात् । तद्वधृश्चान्याश्च राजपत्न्यो ग्रासाच्छादनं लभेरन्, अनिच्छन्त्यो वा व्रजेयुः । क्लीबोन्मत्तान् राजा विभृयात् । तद्गामित्वद्रित्तथस्य[1] ?

प्रासङ्गिकं श्राद्धप्रसङ्गेन ब्राह्मणपूजनम् ।

मनु.[2]—

श्रोत्रियं व्याधितार्त्तौ च बालवृद्धावकिञ्चनम्[3] ।
महाकुलीनमार्यं च राजा सम्पूजयेत्सदा ॥ १४३ ॥

गौतमः[4]—

विभृयाद् ब्राह्मणाँञ्छ्रोत्रियान् । निरुत्साहांश्चाब्राह्मणान् । अकरांश्च । उपकुर्वाणांश्च ॥

आपस्तम्बः—

आवसथे वसंञ्छ्रोत्रियानतिथीन्वासयेत्तेषां यथागुणमावसथाः शय्यान्नपानं च देयं गुरूनमात्यांश्च नातिजीवेत् ।

शंखलिखितौ[5]—

राजन्यवैश्यावप्यजीवन्तौ राजानमुपतिष्ठेयाताम् । तावुभौ शक्तितः संविभक्तावुपकुर्यातां । स्वधर्मानुष्ठानेन शिल्पिनः कारवश्च शूद्राः ।

मनुः[6]—

यस्य राज्ञस्तु विषये ब्राह्मणः[7] सीदति क्षुधा ।
तस्यापि तत्क्षुधा राष्ट्रमचिरेणैव सीदति ॥ १४४ ॥
श्रुतवृत्ते विदित्वाऽस्य वृत्तिधर्म्यं[8] प्रकल्पयेत् ।
संरक्षेत्सर्वतश्चैनं पिता पुत्रमिवौरसम् ॥ १४५ ॥
संरक्ष्यमाणो राज्ञा यं कुरुते धर्ममन्वहम् ।
तेनायुर्वर्धते राज्ञो द्रविणं राष्ट्रमेव च ॥ १४६ ॥

यमः—

पूर्वरात्रान्तरात्रेषु द्विजा यस्य ह्यधीयते ।
स राजा सह राष्ट्रेण वर्धते ब्रह्मतेजसा ॥ १४७ ॥
राजा यत्कुरुते पापं प्रमादात्महते न वा ।

१. The reading is ambiguous २. 8. 395. ३. So Manu., ०किञ्चनौ MS. ४. 2 1 10 9–12. ५. P. 38. ६. 7. 134—136. ७ श्रोत्रिय. for ब्राह्मणः इति मु० म० ८. वृत्ति धर्म्यं for वृत्तिधर्मं इति मु० म०

वसन्ते ब्राह्मणा राष्ट्रे जप्येन शमयन्ति तत् ॥ १४८ ॥
ब्राह्मणान्पूजयेन्नित्यं प्रातरुत्थाय भूमिप: ।
ब्राह्मणानां प्रसादेन वसन्ति दिवि देवता: ॥ १४९ ॥
यदनु व्याहरन्त्येते शुभं वा यदि वाऽशुभम् ।
तत्तथा नान्यथा कुर्याद् ब्राह्मणा ह्यत्र कारणम् ॥ १५० ॥

तथा—

अमेयमच्छेद्यमनादिमक्षयं
निधिं पुराणं परिपालयन्ति ये ।
महीपतिस्तानभिपूज्य वै द्विजान्
भवेदजेयो दिवि देवराडिव ॥ १५१ ॥
शक्यं हि कवचं भेत्तुं नाराचेन शरेण वा ।
अपि वज्रसहस्रेण ब्राह्मणाशी: सुदुर्भिदा ॥ १५२ ॥

मनु:[1]—

नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्धते ।
ब्रह्म क्षत्रेण संयुक्तमिह[2] चामुत्र वर्धते ॥ १५३ ॥
राजा वृक्षो ब्राह्मणास्तस्य मूलं
पौरा: पर्णं मन्त्रिणस्तस्य शाखा: ।
तस्माद्राज्ञा ब्राह्मणा रक्षणीया
मूले गुप्ते नास्ति वृक्षस्य नाश: ॥ १५४ ॥
आसन्नो हि दहत्यग्निर्दूराद्दहति ब्राह्मण: ।
प्ररोहत्यग्निना दग्धं ब्रह्मदग्धं न रोहति[3] ॥ १५५ ॥
ब्राह्मणानां च शापेन सर्वभक्षो हुताशन: ।
समुद्रश्चाप्यपेयश्च विफलस्तु पुरन्दर: ॥ १५६ ॥
चन्द्रमा राजयक्ष्मी च पृथिव्यामूषराणि च ।
वनस्पतीनां निर्यासो दानवानां पराजय: ॥ १५७ ॥
अनन्तान्येव तेजांसि ब्राह्मणानां महात्मनाम् ।
तस्माद्विप्रेषु नृपति: प्रणमेन्नियमेन च ॥ १५८ ॥

विफलो=वृषणरहित: ।

---

१. 9. 322. २. क्षत्रं च सम्पृक्तमिह० for क्षत्रेण संयुक्तमिह० इति कु० म०. ३. RP. (P. 143,); this line is missing in MS

मनु[1]—

परामप्यापद् प्राप्तो ब्राह्मणान्[2] प्रकोपयेत् ।
ते ह्येन कुपिता हन्यु सद्य सबलवाहनम् ॥ १५६ ॥
[1] यै कृत सर्वभक्षोऽग्निरपेयश्च महोदधि ।
क्षयी चाप्यायित सोम को न नश्येत्प्रकोप्य तान् ॥ १६० ॥
लोकानलोकान् कुर्युस्ते[3] लोकपालाश्च कोपिता ।
देवान् कुर्युरदेवांश्च क क्षिण्वस्तान् समृध्नुयात् ॥ १६१ ॥
यानुपाश्रित्य[4] तिष्ठन्ति लोका देवाश्च सर्वदा ।
ब्रह्म चैव धन येषा[4] को हिंस्यात्ताँञ्जिजीविषु ॥ १६२ ॥
[5]प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवत महत् ।
एव विद्वानविद्वांश्च ब्राह्मणो दैवत महत्[5] ॥ १६३ ॥
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ।
हूयमानश्च यज्ञेषु भूय एवाभिपूज्यते[6] ॥ १६४ ॥
एव यद्यप्यनिष्टेषु वर्तन्ते सर्वकर्मसु ।
सर्वथा ब्राह्मणा पूज्या[7] दैवत परम[8] हि तत् ॥ १६५ ॥
क्षत्रस्यापि[9] प्रवृद्धस्य ब्राह्मणान् प्रति सर्वत[10] ।
ब्रह्मैव सन्नियन्तृ स्यात् क्षत्र हि ब्रह्मसम्भवम् ॥ १६६ ॥
अद्भ्योऽग्निर्ब्रह्मत क्षत्रमश्मतो लोहमुत्थितम् ।
तेषा सर्वत्रग तेज स्वासु योनिषु शाम्यति ॥ १६७ ॥

महाभारते[11]—

अष्टौ पूर्वनिमित्तानि नरस्य [12]विनशिष्यत ।
ब्राह्मणान् प्रथम द्वेष्टि ब्राह्मणैश्च[13] विरुध्यते ॥१६८॥

---

१ 9 313—321 २ So Manu ब्राह्मणा न MS ३ ०नन्यान्सृजेयुर्ये for ०नलोकान् कुर्युस्ते इति मु० म० ४ So Manu, यान्समाश्रित्य तिष्ठन्ति लोका देवाश्च सर्वदा । ब्रह्म चैव धन येषा MS ५ For this verse Manu reads —अविद्वांश्चैव विद्वाश्च ब्राह्मणो दैवत महत् । प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवत महत् । ६ ०वर्धते for ०पूज्यते इति मु० म० ७ So Manu, ब्राह्मणा पूज्यो MS ८ परम दैवत for दैवत परम इति मु० म० ९ ०ति, for ०पि इति मु० म० १० सर्वेश for सर्वत इति मु० म० ११ Udyoga 33 93—95 १२ So Maha विनमिष्यत MS १३ So Maha, ब्राह्मणाश्च MS

ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ १६९ ॥
नैनान् स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान्दोषान्नरः प्राज्ञो बुध्येद् बुध्या[1] विसर्जयेत् ॥ १७०॥

भीष्म उवाच—

एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत !
ब्राह्मणानामनुज्ञानमत्यन्तं सुखमिच्छता ॥ १७१ ॥
कर्तव्यं पार्थिवेनेह तद्विद्धि भरतर्षभ !
श्रोत्रियान् स्नातकान् वृद्धान्नित्यमेवाभिपूजयेत् ॥१७२॥
पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान् ।
सान्त्वेन भोगदानेन नमस्कारैस्तथेज्यया ॥ १७३ ॥
एतत्कृत्यतमं राज्ञां नित्यमेवाभिलक्षयेत् ।
यथात्मानं यथा पुत्रांस्तथैतान्परिपालयेत् ॥ १७४ ॥
ये चाप्येषां पूज्यतमास्तान्नृपः प्रतिपूजयेत् ।
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते ॥ १७५ ॥

राजेत्यनुवृत्तौ ब्रह्मपुराणे—

नित्यं सन्निहितान्देवान् मुनीन् नागांश्च पूजयेत् ।
पिशाचेभ्यो बलिं दद्यात् सन्ध्याकाले च नित्यशः ॥१७६॥

भविष्यपुराणे—

राज्ञो पूज्यः सदा प्रोक्तः कार्तिकेयो महीपते ।
कार्त्तिकेयादृते राज्ञां नान्यं पूज्यं प्रचक्षते ॥ १७७ ॥
संग्रामे गच्छमानो यः पूजयेत्कृत्तिकासुतम् ।
स शत्रून् जयते वीरो यथेन्द्रो दानवान् रणे ॥ १७८ ॥
तस्मात्सर्वप्रयत्नेन पूजयेच्छङ्करात्मजम् ।
पूजमानस्तु तं भक्त्या चम्पकैर्विविधैर्नृप !
मुच्यते सर्वपापेभ्यः स हि गच्छेच्छिवालयम् ॥ १७९ ॥

देवीपुराणे—

नामभेदेन सा भिन्ना अभिन्ना परमार्थतः ।
शिवा नारायणी गौरी चर्चिका विमला उमा ॥ १८० ॥

---

१. So Mahā.; बुद्ध्या बुध्वा विवर्जयेत् MS

सा वन्द्या पूजनीया च सततं तत्प्रभावितैः ।
विजयार्थं नृपैः खड्गे छुरिकापादुके पटे ॥ १८१ ॥
चामुण्डां चित्ररूपां च लिखितां चाथ पुस्तके ।
ध्वजे वा कारयेच्छत्रे[1] स नृपो विजयेद्रिपून् ॥ १८२ ॥

इति राजकृत्यम् ॥

## अथ देवयात्राविधिः (१६)

तत्र ब्रह्मपुराणे—

वैशाखादिषु मासेषु पक्षसु देवगृहेषु च ।
यात्रोत्सवः सदा कार्यः प्रतिसंवत्सरेऽपि ॥ १ ॥
कार्या च ब्रह्मणो यात्रा प्रतिपद्यपि सर्वदा ।
द्वितीयायां च देवेभ्यो विवाहम्मे महोत्सवे ॥ २ ॥
भागीरथ्यै तृतीयायां कर्तव्या च सुशोभना ।
विनायकाय नागेभ्यश्चतुर्थ्यामथ कारयेत् ॥ ३ ॥

चतुर्थ्यामित्यथशब्देन पञ्चम्युपादीयते—

स्कन्दाय षष्ठ्यां सप्तम्यां सूर्येभ्यश्च यथाक्रमम् ।
पुरन्दराय चाष्टम्यां रुद्राय सगणाय च ॥ ४ ॥
दुर्गायाम्यश्च मातृभ्यो नवम्यामथ सर्वदा ।
भूम्यै दशम्यां कर्तव्या सर्वोपकरणान्विता ॥ ५ ॥
एकादश्यां समासेन विधात्रे विश्वकर्मणे ।
द्वादश्यां विष्णवे कार्या सायुधाय महात्मने ॥ ६ ॥
त्रयोदश्यां तु कामाय चतुर्दश्यां कपर्दिने ।
पौर्णमास्यां तु देवेभ्यस्तथा चन्द्रमसे तथा ॥ ७ ॥
अमावास्यायां पर्वान्ते पितृभ्यश्चात्र कुत्रचित् ।
चतुर्दश्यां चतुर्थ्यां वा पितृराजे यमे तथा ॥ ८ ॥
दश्यां पौर्णमास्यां वा नागेभ्यः पञ्चमेऽहनि ।
यात्रां च कर्तुकामेन प्रारम्भे तु दिने दिने ।
विनायकाय पूजा च कर्तव्या मोदकोत्करैः ॥ ९ ॥
द्वितीयेऽहनि कर्तव्या महाशान्तिर्यथाक्रमम् ।
गन्धर्वेभ्यस्तथा पूजा चतुर्थेऽहनि शास्त्रवत् ॥ १० ॥

---

1. So RP. (P 1??), ०च्छत्र MS.

पञ्चमे स्थाननागाय पयसा पायसेन च ।
षष्ठे देयं ब्राह्मणेभ्यो भोजनं च सदक्षिणम् ॥ ११ ॥
स्नपनं सप्तमे कार्यं देशं कृत्वा सुरक्षितम् ।
सुधावदातं कर्तव्यं चित्रितं देवतागृहम् ॥ १२ ॥
रङ्गस्थानं तु देवेभ्यो विहितं कारयेत्तथा ।
स्रग्वस्त्रमाल्यहेमाद्यैः प्रधानं देवमर्चयेत् ॥ १३ ॥
ततोऽर्चास्नपनं कार्यं कल्पशाखाक्रमेण च ।
पुण्याहगीतनृत्याद्यैर्होमैर्बल्युपहारकैः ॥ १४ ॥
ततोऽर्चास्नपनस्यान्ते पौरैर्नृत्यपुरस्सरम्[1] ।
आनेतव्यं च महता विभवेनोदकं शुभम् ॥ १५ ॥
नित्यं सन्निहितात्तीर्थाद्यथाप्राप्तैर्घटैर्नवैः ।
देशकालानुसारेण गजाश्वनृपमानवैः ॥ १६ ॥
तेनोदकेन प्रतिमा स्नाप्या भूमौ च शास्त्रवत् ।
नद्भूमिश्च कर्तव्या सर्वदोषविवर्जिता ॥ १७ ॥
प्राप्ते तु यात्रादिवसे कूटागारं तु कारयेत् ।
पुष्पैर्माल्यैस्तथा वस्त्रैः सर्वशोभासमन्वितम् ॥ १८ ॥
घण्टासहस्रनिनदं सर्वशोभासमन्वितम् ।
आरोप्या प्रतिमा तत्र सुसूक्ष्मा च सुशोभना ॥ १९ ॥
कूटागारं च वोढव्यं गजैरश्वैर्नरैर्वृषैः ।
देशकालानुसारेण वस्त्रमाल्याद्यलंकृतैः ॥ २० ॥
सबलेनानुगन्तव्यं राज्ञा देवस्य पृष्ठतः ।
सुदूरे चानुगन्तव्यं तत्प्रयुक्तैश्च मन्त्रिभिः ॥ २१ ॥
यस्य यस्य समीपे तु स देवो याति पूजितः ।
तेनातिथ्यं च कर्तव्यं तस्मै धूपादिभिः सदा[2] ॥ २२ ॥
च्वेडितोत्कृष्टशब्दैश्च जयवाद्यस्वनेन च ।
यथागमं च कर्तव्यं नगरे च प्रदक्षिणम् ॥ २३ ॥
ततो देवगृहं प्राप्य[3] सम्पूज्य प्रतिमां नयेत् ।
महान्तमुत्सवं कुर्वन् गीतनृत्यसमाकुलम् ॥ २४ ॥

---

१. ०र्नृद्धपुरस्सरैः for ०र्नृत्यपुरस्सरम् RP. २. तथा for सदा RP.
३. So. RP.; वा तु MS.

तस्या रात्रौ[1] ततो दद्या दीपा शतसहस्रश ।
रङ्गभूमौ दिदृक्षूणा प्रकाशार्थं महात्मन ॥ २५ ॥
गीतैं सुभाषितैं श्लोकैर्दर्पयित्वा जनांस्तथा ।
सर्वेषामनुकम्पार्थं धर्मचक्र प्रवर्तयेत् ॥ २६ ॥
रङ्गोपजीविना पश्येत्ततोऽह्नि कौशलम् ।
यथाशक्ति धन तेभ्यो दद्याद्दम्भ च वर्जयेत् ॥ २७ ॥
प्रेक्षाकाले प्रधानास्ते पूजितव्या क्रमेण तु ।
सम्मानपूर्वं विधिवत्त स्थूलकुसुमादिभि ॥ २८ ॥
यात्रावसाने भूतानि पूजनीयानि सर्वदा ।
पूजोपचारैर्बलिभिस्ततो[2] नक्तभ्रमानपि ॥ २९ ॥
अदृष्टविग्रहानेव दिदृक्षूणा महोत्सवम् ।
सन्ध्याया परया भक्त्या त्यक्त्वा सन्देहमात्मन ॥ ३० ॥
सर्वमस्तीति विज्ञाय चेतसा निर्मलेन च ।
एकान्त देवता पूज्या वैशाखे मासि पूर्ववत् ॥ ३१ ॥
गृहे गृहस्थै सम्पूज्या स्त्रियश्च गृहदेवता ।
आचारान् पालयेदेतान् यस्तु राजा समाहित ॥ ३२ ॥
स पुत्रपौत्रसयुक्तो दीर्घायुर्धनवान् भवेत् ।
सर्वत्र जयमाप्नोति याति स्वर्गं च शाश्वतम् ॥ ३३ ॥
यदतद्वैष्णव वास्य देशेऽस्मिन्नश्यते जनै ।
तदा सस्यानि नश्यन्ति घोरैरुदकवर्जितै ॥ ३४ ॥
अतिवृष्टिरनावृष्टिर्दुर्भिक्ष च तथा मृति ।
दम्भाभिमानलोभास्तु तस्मात् त्यक्त्वा प्रयत्नत ।
यदुक्त विष्णुना वाक्य तत्कुर्यात्कृतनिश्चय ॥ ३५ ॥

अथ कौमुदीमहोत्सवः (१७)

तत्र स्कन्दपुराणे—

प्रात प्रभृति राजा च आज्ञापयति कौमुदीम् ।
देवरात्रिं च देवस्य रुद्रस्यासुरनाशिनीम् ॥ १ ॥
सुसमृष्टोपलिप्ताभी रथ्याभि क्रियतां पुरम् ।
वासोभि सहसै सर्वे भवन्तु पुरवासिन ॥ २ ॥

---

१ So RP राज्ञा MS २ ०स्तथा for ०स्ततो RP.

स्त्रियश्च शिरः स्नाताः सदाम्पत्या यथाक्रमम् ।
गायन्तु गायनाश्चैव नृत्यन्तु नटनर्तकाः ॥ ३ ॥
उच्छ्रियन्तां पताकाश्च [1]गृहवीथ्यापणेषु च ।
गृहाणि चोपलिप्तानि नित्यमेव भवन्तु वः ॥ ४ ॥
पुष्पप्रकरजुष्टानि धूपैर्नानाविधैरपि ।
स्रग्दामवन्ति सर्वाणि वनमालाकुलानि च ॥ ५ ॥
दीपा रात्रौ च सर्वत्र राजमार्गे गृहेषु च ।
अनन्तराः क्रियतां वै प्रचुरस्नेहवर्तयः ॥ ६ ॥
तरुणाः सह योषिद्भिः समन्तात्पर्यटन्तु च ।
रममाणा हसन्तश्च गायन्तो नृत्तसेविनः ॥ ७ ॥
भाण्डवाद्यानि वाद्यन्तां नृत्यन्तां दिव्ययोषितः ।
महादेवस्य पूजां च गन्धपुष्पादिकां शुभाम् ॥ ८ ॥
उपहारांश्च विविधान् शयनानि महान्ति च ।
बलयः पुष्कलाश्चैव भक्ष्यभोज्यैरलंकृताः ॥ ९ ॥
दीपांश्च विविधाकारान् पानानि कृशरांस्तथा ।
फलानि च विचित्राणि मांसं पक्वं तथामकम् ॥ १० ॥
सुवर्णमणिचित्राणि ईश्वराय प्रयच्छत ।
वध्यतां पशवश्चात्र भोज्यन्तां च द्विजोत्तमाः ॥ ११ ॥
यो न कुर्यादिदं सर्वं पुरवासी नरः क्वचित् ।
पातयेत्तस्य शारीरं दण्डं राजा महायशाः ॥ १२ ॥
राजापि संयतः शान्तः शुचिः प्रयतमानसः ।
दिवसे दिवसे रुद्रं स्नापयीत[2] प्रयत्नवान् ॥ १३ ॥
पञ्चगव्येन शुद्धेन तैलेन च सुगन्धिना ।
क्षीरेण सर्पिषा दध्ना रसैश्च बहुभिः शुभैः ॥ १४ ॥
पुष्पैः फलैश्च बीजैश्च रत्नैश्चाद्भिः समन्वितैः ।
भस्मना गन्धयुक्तेन उदकेन सुगन्धिना ॥ १५ ॥
एकैकशः स्वयं राजा घटानां दशभिः शतैः ।
दिवसे दिवसे व्यास ! त्र्यम्बकं सोऽभ्यर्चयेत् ॥ १६ ॥
गन्धैः पुष्पैश्च धूपैश्च जाप्यैर्बलिभिरेव च ।

---

1, So RP. (PP 419-421); गृहे MS. २. स्नापयेन for स्नापयीत RP.

पूजयित्वा ततो राजा विप्रानन्यांश्च भोजयेत् ॥ १७ ॥
सत्कृत्वा[1] पशुभिर्मध्यैर्वस्त्रैर्मणिभिरेव च ।
बलिवस्त्रान्नदानैश्च स्तूयमानो गृहान् व्रजेत ॥ १८ ॥

## अथेन्द्रध्वजोच्छ्रायविधिः ( १८ )

तत्र देवीपुराणे—

शुभे ऋक्षेऽथ करणे मुहूर्ते शुभमङ्गले ।
दैवज्ञ सूत्रधारश्च वन गच्छेत्सहायवान् ॥ १ ॥
देवीप्रतिष्ठाविधिना यात्राया य प्रचोदित ।
गत्वान्विष्य शुभ वृक्ष प्रियगु धवमर्जुनम् ॥ २ ॥
उदुम्ब गजकर्णी च पञ्चैतान् शोभनान् हरेत् ।
ध्वजार्थे वर्जयेद्वत्स देवतोद्यानजान् द्रुमान् ॥ ३ ॥
कन्यमध्योत्तमा यष्टी करमानेन कल्पयेत् ।
एकादशकरा वत्स[1] नवपञ्चकराऽपरा ॥ ४ ॥
अनिबद्धा कृमिचिता तथा पक्षिनिकेतनम् ।
वल्मीकपित्र्यवनजा सुशुष्का च सकोटराम् ॥ ५ ॥
कुब्जा च घटसत्तिा तथा स्त्रीनामगर्हिताम् ।
विद्युद्वत्रहता चैव दग्धा च परिवर्जयेत् ॥ ६ ॥
अलाभे चन्दन चाम्र शालशाकमय तथा ।
कर्तव्य शक्रचिह्नार्थे न चान्यद्वृक्षज कचित् ॥ ७ ॥
शुभभूमिभव ग्राह्य शुभलोय शुभावहम् ।
तत सम्पूजयेद् वृक्ष प्राङ्मुखोदङ्मुखोऽपि वा ॥ ८ ॥
नमो वृक्षपत वृक्ष ' त्वामर्चयति पार्थिव ।
ध्वजार्थ[2] तत्त्वतो नात्र अन्यथा उपगम्यताम्[2] ॥ ९ ॥
रात्रौ दद्यो बलि स्वप्ने दिक्षु वृक्षे तथैव च ।
वास वने महावृक्ष[1] कृत्वा ह्यन्यत्र गम्यताम् ॥ १० ॥
ध्वजार्थे देवराजस्य रक्षित त्वा नयाम्यहम्[3] ।
पूजयित्वा ततो वृक्ष बलिं भूम्या[4] प्रदापयेत् ॥ ११ ॥

---

१. So RP, स कृत्वा MS २ For this line RP (P 422) reads—
ध्वजार्थमन्यथा नेद तत्त्वथा उपगम्यताम् ३ So RP, रक्षन्ति तव च च च MS
४. So RP, सोम तु for भूम्यां प्र० MS

[1]प्रभाते छेदयेद् वृक्षं शुभस्वप्नादिदर्शनैः ।
उदङ्मुखः प्राङ्मुखो वा मध्वक्तेनाथ पर्शुना ॥ १२ ॥
पूर्वोत्तरं पतन् शस्तो निश्शब्दो निर्व्रणः शुभः ।
[1]प्रलम्नः पादपेऽन्यस्मिन्नन्यथा तु परित्यजेत् ॥ १३ ॥
अष्टांगुलं त्यजेन्मूलमग्रं तत्र जले क्षिपेत् ।
तथा तं चानयेद्वत्स ! शकटेन वृषैरथ ॥ १४ ॥
युवभिर्बलसम्पन्नैः प्रयत्नात्पुरतः पुरम् ।
नीयमाना यदा यष्टिः समा वा चतुरस्त्रिका ॥ १५ ॥
वृत्ता वा भङ्गमादत्ते राजपुत्रपुरोहितौ ।
[2]आराभङ्गे बलं भिन्द्यान्नेम्या भङ्गे क्षयस्तथा ॥ १६ ॥
रथस्य त्वक्षभङ्गे तु शान्तिं तत्र तु कारयेत् ।
इन्द्रं यच्छेति मन्त्रेण जातवेदोमयेन वा ॥ १७ ॥
तथा नीत्वा शुभे लग्ने पुरे तामुपवेशयेत् ।
द्वारे शोभां पुरे रथ्या [3]गृहेष्वपि च कारयेत् ॥ १८ ॥
पटुभिः पटहनादैर्वेश्यासङ्घस्य मङ्गलैः ।
द्विजानां वेदशब्दैश्च तां नयेद्यत्र चोच्छ्रयेत् ॥ १९ ॥
तत्रस्थां [4]चित्रकर्मारनिर्मितैस्तां तु वेष्टयेत् ।
वस्त्रैस्तद्वैव कृत्तोनैः शुभैः सूक्ष्मैर्यथाक्रमम् ॥ २० ॥
नन्दोपनन्दसंज्ञाश्च कुमार्यः प्रथमांशके ।
देव्यो जयाविजयाख्याः[5] षोडशांशैर्व्यवस्थिताः ॥ २१ ॥
अविकोशात्तु जनितैर्नत्वाथ[6] ध्वजदैवतम् ।
ध्वजस्य परिमाणे ताः सम्पाद्यैव विनिर्दिशेत्[7] ॥ २२ ॥
षोडशांशविहीनानि कुर्याच्छेषाणि बुद्धिमान् ।
वाससां[8] चित्रवर्णानां स्वयम्भूः प्रथमामदात् ॥ २३ ॥
सुभक्तां चतुरस्रां च विश्वकर्मा द्वितीयकम् ।

---

१. अलग्नः for प्रलग्नः RP. २. So RP., अरा० MS. ३. हट्टे० for गृहे० RP. ४. So RP. चित्रकर्मार० MS. ५. जायाविजाया for जयाविजया० RP. ६. अम्बिकां शत्रुजरित्रीं नत्वा० for अविकोशात्तु जनितैर्नत्वा RP. ७. So RP., ध्वजपरिमाणां ताः संविधैर्विनिर्दिशेत् MS. ८. रसानां for वाससां RP.

अष्टास्रि च स्वयं शक्रो नीलरक्तामदात् पुरा ॥ २४ ॥
कृष्णां यमेन[1] दत्तं च वरुणेन महांशुकम् ।
मञ्जिष्ठं च जलाकारं वायुर्देवोऽपि पट्टकम्[2] ॥ २५ ॥
नीलवर्णं च तत्प्रादात्स्कन्दो[3] बहुविचित्रितम् ।
वृत्तं तु दहनः प्रादात् स्ववर्णं[4] तच्च अष्टमम् ॥ २६ ॥
वैदूर्यसदृशं चेन्द्रो ग्रैवेयं पुनरप्यदात् ।
चक्राङ्काकृतिवत्सूर्यो विश्वे देवास्तु पद्मकम् ॥ २७ ॥
नीलं नीलोत्पलाभासमृषयोऽपि च तद्ददुः ।
शुक्रेण गुरुणा न्यस्तं विशालं[5] तच्च मूर्धनि ॥ २८ ॥
ग्रहैरपि विचित्राणि तानि दत्तानि मातृभिः ।
यद्यद्येनैव दत्तं तु केतोस्तत्तस्य भूषणम् ॥ २९ ॥
तदेवं तद्विजानीयाद्यात्रादिभिरथोच्छ्रयेत् ।
कर्षन्ती प्रवरां भूमिं यष्टी राष्ट्रं[6] निहन्ति च ॥ ३० ॥
बालानां तलशब्देन देशघातं[7] विनिर्दिशेत् ।
नृपघातकरी शीर्णा[8] सर्वशान्ता शुभावहा ॥ ३१ ॥
शम्भुसूर्ययमेन्द्रेन्दुधनदानां च वारुणैः ।
वह्नेर्नागस्य मन्त्रैश्च होतव्या दधि चाक्षताः ।
शुक्रं स्कन्दगुरुं रुद्रमप्सरोभिः प्रपाठयेत् ॥ ३२ ॥
हुत्वा च विधिवद्वह्निं ज्वालां लक्षेत बुद्धिमान् ।
सुतेजस्सुमनोदीप्ता महती रविसप्रभा ॥ ३३ ॥
रक्ताशोकसमाकारा रथभेरीस्वना शुभा ।
शङ्खदुन्दुभिमेघानां नादाः शस्तास्तु पावके ॥ ३४ ॥
कन्दलीष्विक्षुदण्डेषु पताकाश्च समुच्छ्रयेत् ।
अन्याश्च विविधाः शोभा. शक्रकेतौ समुच्छ्रयेत् ॥ ३५ ॥
प्रौष्ठपद्यामथाष्टम्यां शुक्लायां शोभने दिने[9] ।
आश्विने चाथ शुक्लायां श्रवणेनाथ[10] उच्छ्रयेत् ॥३६॥

१. So RP., कृष्णामदेन MS. २. So RP., वायुर्देवाय सुकरम् RP. ३. So RP, स्कन्दोवह्नि० MS. ४. So RP., सुवर्णं MS. ५. So RP., न्यष्टविलासं MS. ६. So RP., रात्रि MS. ७. So RP., देशघानं MS. ८. So RP., कीर्णा MS. ९. So RP, च ते MS. १०. So RP., चाथ MS.

घोषैश्च नटवृन्दैश्च पटुभेरीनिनादितम् ।
वितानध्वजशोभाढ्यं पताकाभिः समुज्ज्वलम् ॥ ३७ ॥
विष्वक्शाशक्रमन्त्रेण सिंहरवःकृतेन च ।
दृढमातृकरन्ध्रस्थं शुभतोरणमार्गगम् ॥ ३८ ॥
अविलम्बितमुत्तानमभग्नपिटकं[1] समम् ।
न द्रुतं च समुत्थाप्यः पेतुर्वासवज्ञो विभो ॥ ३९ ॥
उच्छ्रितं रक्षयेत्प्राज्ञः काकोलूककपोतयोः ।
न तत्र लङ्घनं दद्यादन्येषामपि पक्षिणाम् ॥ ४० ॥
मन्त्रेण चोच्छ्रयं कुर्यादिन्द्रकेतोर्यथाविधि ।
यथा सुसंस्कृतं पूज्यं सुलयन्त्रं सुयन्त्रितम् ॥ ४१ ॥
रात्रौ जागरणं कुर्यादिन्द्रमन्त्रानुकीर्तनैः ।
पुरोहितः सदैवज्ञः शुभशान्तिरतः सदा ॥ ४२ ॥
केतुपातो नृपं हन्यात्पताका महिषीवधम् ।
पिटको[2] युवराजस्य सचिवमनुकम्पनम्[3] ॥ ४३ ॥
राष्ट्रं तोरणपातेन ध्वजे अन्नक्षयो भवेत् ।
पतिते शक्रदण्डे च नृपमन्यं समादिशेत् ॥ ४४ ॥
कृमिजालसमुत्थाने शलभात्तस्कराद्भयम् ।
सुसमे संस्थिते शान्तिर्नृपस्य नगरस्य च ॥ ४५ ॥
तिष्ठत्येवोच्छ्रितो[4] यावत्तावद्युगसमाः समाः ।
निरता यजने केतो रक्षीरश्निन्द्रकन्यकाः ॥ ४६ ॥
पतिते तु तथा कार्या पूजोत्थाने तु यादृशी ।
रात्रौ शुभं कृत्यतमं नादृष्टं काकपोतकैः ॥ ४७ ॥
नृपतिः सहराष्ट्रीयैर्यश्चैवं कारयेत्क्रतुम् ।
नगरे वा पुरे खेटे यद्येवं कुरुते नृपः ॥ ४८ ॥
पौरन्दरं पुरद्वारे वृषसिंहसमुच्छ्रितम् ।
केतुं समस्तघोराणां नाशनं जयदं मतम् ॥ ४९ ॥
एवं[5] पूर्वं हरि. केतुं प्राप्तवान् नृपवाहनात्[6] ।

---

१. ०पीठकं for पिटकं RP. २. पीठको for पिटको RP. ३. So RP., सदैवमनुकम्पयेत् MS. ४. So RP., ०स्थितो MS. ५. एनं for एवं RP. ६. So RP., वृप० MS.

तवो ब्रह्माथ तेनैव ब्राह्मणः शक्रमागत. ॥ ५० ॥
तेन सोमस्य तद्दत्तं ततो दत्तं[1] समागताः ।
तदाप्रभृति कुर्वन्ति नृपा अद्यापि चोछ्रयम् ॥ ५१ ॥
एवं यः कारयेद्राजा केतु विजयकारकम् ।
तस्य पृथ्वी घनोपेतां सद्वीपा वशगा भवेत् ॥ ५२ ॥
इत्यैन्द्रध्वजोच्छ्रायः ।

## अथाश्विनशुक्लनवम्यां देवीपूजा (१९)

देवीपुराणे—*

ब्रह्मोवाच—हते घोरे महावीरे सुरासुरभयङ्करे ।
देव्या उपासका देवाः प्रभूता राक्षमास्तथा ॥ १ ॥
आगता घातितं दृष्ट्वा महिषं तं सुदुर्जयम् ।
ब्रह्मविष्णुमहेशाना[2] इन्द्रचन्द्रयमानिलाः ॥ २ ॥
आदित्या वसवो रुद्रा मह। नागाश्च[3] गुह्यकाः ।
समेत्य सर्वे देवास्ते देवीं भक्त्याथ[4] तुष्टुवुः ॥ २३ ॥
वरं च सर्वलोकानां प्रददौ भयनाशिनी ।
वलिं ददुश्च भूतानां महिषाजामिषेण तु ॥ ४ ॥
पुरेषु शङ्खभेर्यैश्च शतशोऽथ सहस्रशः ।
कृता दुन्दुभिनादाश्च पटुशब्दाः समर्दलाः ॥ ५ ॥
पताकाध्वजयन्त्रादिघण्टाचामरशोभिनम् ।
तद्दिनं कारयेच्छक्र ! देवीभक्तः सुरोत्तम: ॥ ६ ॥
एवं तस्मिन्दिने वत्स ! भूतप्रेतसमाकुले[5] ।
कृताथ सर्वदेवैश्च महापूजाथ शाश्वती ॥ ७ ॥
आश्विने मासि मेघान्ते महिषासुरनिबर्हिणीम् ।
देवीं सम्पूजयित्वा ये अर्धरात्रेऽष्टमीयुते ॥ ८ ॥
घातयन्ति पशून् भक्त्या ते भवन्ति महाबलाः ।
वलिं च ये प्रयच्छन्ति सर्वभूतविनाशकम्[6] ॥ ९ ॥
तेषां तु तुष्यते देवी यावत्कल्पन्तु शाङ्करम् ।

---

१. RP. दत्ते for दत्तं RP. * RP. 439—442. २. ०ब्रमे० for ०महे० RP. ३ So RP., नागाः मनुष्यकाः MS. ४. भक्त्या च for भक्त्याथ RP. ५. ०समाकुलम् for ०समाकुले RP. ६. ०विनाशनी for ०विनाशकम् RP.

कारयेत्तुष्यते येन देवी पशुनिपातनैः ॥ ३५ ॥
अश्वमेधमवाप्नोति भक्तितः सुरसत्तम ! ।
महानवम्यां पूजेयं सर्वकामप्रदायिका ॥ ३६ ॥
सर्वेषु वत्स ! वर्षेषु तत्र भक्त्या प्रकीर्तिता ।
कृत्वाऽऽप्नोति यशो राज्यं[1] पुत्रायुर्धनसम्पदः ॥ ३७ ॥

## अथ चिह्नविधिः (२०)

तत्र देवीपुराणे—*

ब्रह्मोवाच—क्षीराशी कार्त्तिकारम्भे[2] देवीभक्तिरतो नरः ।
शाकयावक एकाशी प्रातःस्नायी शिवारतः[3] ॥ १ ॥
पूजयेत्तिलहोमं तु दधिक्षीरघृतादिभिः ।
कुर्याद्देव्यास्तु मन्त्रेण शृणु पुण्यफलं हरेः ॥ २ ॥
महापातकसंयुक्तो युक्तो वाप्युपपातकैः ।
मुच्यते नात्र सन्देहो यस्मात्सर्वगता शिवा ॥ ३ ॥
अन्यो वा भावनायुक्तस्त्वनेन विधिना शिवाम् ।
स्वयं वा अन्यतो वापि पूजयेत्पूजयीत वा ॥ ४ ॥
न तस्य भवति व्याधिर्नवा शत्रुकृतं भयम् ।
नोत्पातग्रहदौःस्थ्यं वा नच राष्ट्रं विनश्यति ॥ ५ ॥
सदा स्वभावसम्पन्ना ऋतवः शुभदा घनाः ।
निष्पत्तिः सर्वसस्यानां तस्करा न भवन्ति च ॥ ६ ॥
प्रभूतपयसो गावो ब्राह्मणाश्च क्रियापराः ।
स्त्रियः पतिव्रताः सर्वा नृपा निर्वृतिकारिणः ॥ ७ ॥
फलपुष्पवती धात्री सस्यानि रसवन्ति च ।
भवेयुर्नात्र सन्देहश्चर्चिकाविधिपूजनात्[4] ॥ ८ ॥
जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥ ९ ॥
अनेनैव तु मन्त्रेण जपं होमं तु कारयेत् ।
प्रातस्तु संस्मृता वत्स ! मद्दिपन्नी प्रपूजिता[5] ।

---

१. So RP , राज्य० MS. * Cf. RP. PP. 442—444. २. So RP., ०रम्भं MS. ३. शिवानतः for शिवारतः RP. ४. ०श्चाम्बिका० for ०श्चर्चिका० RP., ५. So RP., सुपूजिता MS.

अघं नाशयते क्षिप्रं यथा सूर्योदये तमः ॥ १० ॥
सिंहारूढा ध्वजे यस्य नृपस्य रिपुहा उमा ।
द्वारस्था पूज्यते वत्स ! न तस्य रिपुजं भयम् ॥ ११ ॥
कपिसंस्था महामाया सर्वशत्रुविनाशिनी ।
नृपे यथेप्सितं दद्यात्कलभे[1] श्रियमुत्तमाम् ॥ १२ ॥
हंसे विद्यार्थकामांस्तु[2] बर्हिणेऽभीष्टपुत्रदा ।
गरुत्मति[3] महामाया सर्वरोगविनाशिनी ॥ १३ ॥
महिषस्था महामारीं शमयेद् ध्वजसंस्थिता ।
करिगा सर्वकार्येषु नृपैः कार्या त्रिशूलिनी ॥ १४ ॥
पद्मस्था चर्चिका रौप्या धर्मकामार्थमोक्षदा ।
प्रेतस्था सर्वभयदा[4] नित्यं पशुनिपातनैः ॥ १५ ॥
पूजिता देवराजेन्द्र ! नीलोत्पलकरा वरा ।
भवेत्तु सिद्धिकामस्य सिंहासने सव्यवस्थिता ॥ १६ ॥
गन्धपुष्पार्चिता कृत्वा वस्त्रहेमसुचर्चिताम् ।
फलशालियवैः शूकवर्धमानैर्विभूषिताम् ॥ १७ ॥
शोभनामुच्छ्रयेदग्रे पताका वा मनोरमाम् ।
चामरं कलशं शङ्खं सातपत्रं वितानकम् ।
भवेत्तु सिद्धिकामस्य नृपस्य फलदायकम् ॥ १८ ॥
नमो विश्वेश्वरि दुर्गे चामुण्डे चण्डहारिणि ।
ध्वजं समुच्छ्रयिष्यामि वसोर्धारासुखावहम्[5] ॥ १९ ॥

अथ गवोत्सर्गः ( २१ )

तत्र देवीपुराणे*—

कृष्णपक्षे त्वमावास्या[6] कार्त्तिकस्य तत परे ।
योऽह्नि कुर्याद्वृषोत्सर्गमश्वमेधफलं लभेत्[7] ॥ १ ॥
सुवर्णदाने गोदाने भूमिदाने च यत्फलम् ।
तत्फलं कोटिगुणितं गवोत्सर्गेण लभ्यते ॥ २ ॥

---

१. So RP, ०लकरा MS. २ So RP., ०कामं तु MS. ३. So RP, गरत्मता MS ४ So RP, ०भवदा MS ५. वसोर्धारां सुखावहम् for वसोर्धारासुखावहम् RP * Cf RP. PP. 416-417. ६. So RP. ०वास्यां MS. ७ So RP, भवेत् MS

तस्मान्मनोरमे स्थाने शाद्वले गर्तवर्जिते ।
शर्करा अश्मरहिते शङ्खभेरीनिनादिते ॥ ३ ॥
स्तम्भद्वयं समारोप्य पूर्वपश्चिमसंस्थितम् ।
तत्र दर्भमयी कार्या शरवंशभवाथवा ॥ ४ ॥
मध्ये कम्बलसंयुक्ता दीर्घरज्जुः सुशोभना ।
उभयोः पार्श्वयोर्विप्रा वेदध्वनिसमन्विताः ॥ ५ ॥
एवं विधानतः कृत्वा उत्सर्गं कारयेत्ततः ।
प्रथमं गच्छति होता यजमानसमन्वितः ॥ ६ ॥
ब्रह्मक्षत्रविशः शूद्रास्तथा गावः प्रजाः पुनः ।
तथान्ये वर्णबाह्यास्तु चण्डालपरिवर्जिताः ॥ ७ ॥
गच्छन्ति मुदिता हृष्टा हास्यतोषसमन्विताः ।
यस्त्वेवं कुरुते राजा पुरे ग्रामेऽथ पत्तने ॥ ८ ॥
नश्यन्ति चेतयः सर्वाः प्रजानां नन्दनं[1] चिरम् ।
नाकाले म्रियते राजा पुत्रपौत्रैश्च वर्धते ॥ ९ ॥
देवा भवन्ति सुप्रीतास्तथा वै मातरस्तथा ।
गोलोकं च लभेद्वत्स ! सर्वान् कामानवाप्नुयात् ॥ १० ॥

ईतयः प्रसिद्धाः, यथा—

अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ।
अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥

## अथ वसोर्धारा (२२)

तत्र भविष्यपुराणे*—

अगस्त्य उवाच—वसोर्धारा स्थिता देवी सर्वकामप्रदायिका ।
तथा ते कथयिष्यामि शृणु पुण्यविवृद्धये ॥ १ ॥
सर्वेषामेव देवानां[2] कथितेयं मयोत्तमा ।
विशेषेण तु वह्निस्था आयुरारोग्यदा मता ॥ २ ॥
विजयं भूमिलाभं च मानवानां प्रियं तथा ।
विद्यासौभाग्यपुत्रादि पुण्यदस्था सम्प्रयच्छति ॥ ३ ॥
तस्मान्नृपेण भूत्यर्थं वसोर्धाराश्रिता शिवा ।

१. So RP., नन्दते MS. * Cf. RP PP. 447-456 २. देवामामुक्ता देवी for देवानां कथितेयं RP.

पूजनीया यथाशक्त्या सर्वकामफलप्रदा ॥ ४ ॥
रुद्रादित्या मरुा विष्णुर्ब्रह्मा[1] यक्षा सकिन्नरा ।
हुताशनमुखा. सर्वे दृष्टादृष्टफलप्रदा ॥ ५ ॥
गोदानं भूमिदान च रत्नसर्पिस्तिलादि च ।
दानानि च महान्त्याहुस्तेषा धारा विशिष्यते ॥ ६ ॥
विप्राणा कोटिकोटीना भोजयित्वा तु यत्फलम् ।
लभते तदवाप्नोति धारा दत्त्वा हुताशने[2] ॥ ७ ॥
व्यतीपाते न सन्देह. स च सूक्ष्म प्रकीर्तित ।
अयन विषुवच्चैव दिनच्छिद्र तथैव च ॥ ८ ॥
दुष्प्राप दानहोमाना धाराया लभ्यते नृप ।
तस्मान्नृपेण वृद्धचर्थं दृष्टादृष्टजिगीषुणा ॥ ९ ॥
वसोर्धारा प्रवर्तव्या सर्वकामसुखावहा ।
समा वा अर्धमर्ध वा ऋतुमासार्धवासरम् ॥ १० ॥
कृत्वा विभवरूपया शाश्वत लभ्यते फलम् ।
एकाहमपि यो देवीं कल्पयित्वा हुताशने ॥ ११ ॥
पातयेत्सर्पिषो धारा स लभेदीप्सित फलम् ।
देवमातृसमीपस्थ शिवविष्णुसमीपगम् ॥ १२ ॥
भानो प्रजापतेर्वापि वसोर्धारागृह भवेत ।
चिरन्तनेषु सर्वेषु स्वय वा सस्कृतेषु च ॥ १३ ॥
गुहासु च विचित्रासु गृहगर्भेषु भूरिषु ।
दत्त्वा समीहितान् कामान् विधिना लभते नृप ॥ १४ ॥
अथ सामान्यतो गेह समसूत्र जलोन्मुखम् ।
वास्तुसशुद्धविन्यासमेकादशकर परम् ॥ १५ ॥
श्रीणि पञ्चाथवा सप्त दश वा नव कारयेत् ।
पक्केष्ट शैलदार्वं वा सालिन्द सहतोरणम् ॥ १६ ॥
पञ्चसप्तनवास्य[3] वा गवाक्षकविभूषितम् ।
सर्वतोभद्रविन्यास क्रमवृद्धया विवर्द्धितम्[4] ॥ १७ ॥

---

१ So RP, ०र्वय for ब्रह्मा MS २ So RP, सदृश्चरतिनाशान्त पकेनापि च तद्भवेत् MS ३ So RP, पञ्च सप्ताथ नव वा MS ४ So RP, सर्वतोभद्रविनष्टक्रमविद्याविवस्ववम् MS

ऊर्ध्वं वै धूमनिष्काशं प्रकाशं च विशेषतः ।
सदेवसंग्रहं कार्यमथवा दैवतैः समम्[१] ॥ १८ ॥
तस्य मध्ये भवेत्कुण्डं हस्तादिशुभलक्षणम् ।
चतुष्कमथवा वृत्तं पङ्कजाकृति वाथ वा ॥ १९ ॥
पृथिवीजयदं शाक्रं वृत्तं कामफलप्रदम् ।
पङ्कजे जयमारोग्यं योगदानफलप्रदम्[२] ।
शेषाः कार्या विधानेन[३] कुण्डः कार्यो विजानता ॥ २० ॥
सामान्यं सर्वहोमेषु शाक्रं कुण्डं[४] वरोत्तमम्[५] ।
विस्तारं चात्र[६] तुल्यं तु त्रिमेखलसमन्वितम् ॥ २१ ॥

*शाक्रं कुण्डम्=चतुरस्रम् ।*

चतुस्त्रि द्वे च वा कुर्यादङ्गुलाम् कुण्डमानतः ।
द्विगुणान्[७] द्विगुणे कुण्डे होमसारेया[८] कारयेत् ॥ २२ ॥
एवं संसाधयेद्विप्र ! ततः पात्रं सश्रृङ्खलम् ।
हैमं वा राजतं वापि ताम्रं वा लक्षणान्वितम् ॥ २३ ॥
चतुर्भिः कटकैर्युक्तमयःश्रृङ्खलसंग्रहम् ।
तस्य मध्ये भवेद्रन्ध्रं कार्यं वत्स शलाकया ॥ २४ ॥
हेमोत्थया प्रमाणेन चतुरङ्गुलमानया ।
घृतनिष्क्रमणार्थाय कार्यं सम्यग्विपश्चिता ॥ २५ ॥
पलैर्दशभिरर्घोनैर्नाड्येका तु यथा व्रजेत् ।
पञ्चभिस्तु शतैर्होमः समत्याथ पडस्रयोः ॥ २६ ॥
यथा पूर्णा व्रजेद्वत्स ! तथा कुर्यान्नचान्यथा ।
हस्तमात्रं भवेद्धैमं श्रृङ्खलं भुजगाकृति[९] ॥ २७ ॥
रन्ध्रे[१०] सूत्रनिबद्धं च अवलम्ब्य अधस्ततः[११] ।
मणिं वा पङ्कजं यत्र साश्वत्थं[१२] कारयेत्तले ॥ २८ ॥

---

१ देवतसमम् for दैवतैः समम् RP. २. योन्यां कामफलप्रदम् for योगदानफलप्रदम् RP. ३. कार्यविभागेन for कार्यविधानेन RP. ४. शाक्रकुण्डं for शाक्रं कुण्डम् RP. ५. नरोत्तम for वरोत्तमम् RP. ६. विस्तारखात० for विस्तारं चात्र RP. ७. So RP., द्विगुणं MS. ८. So RP., होमान् सारेया MS. ९. ०कृतम् for ०कृति RP. १०. So RP., रन्ध्र० MS. ११. अधस्ततम् for अधस्ततः RP १२. पात्रमाबद्धं for यत्र साश्वत्थं RP.

एवं कार्यानुरूपेण द्विगुणं त्रिगुणं च वा ।
कुर्यात्पात्रं घृतं चैव प्रतिष्ठा देव चोदिता[1] ॥ २९ ॥
उद्देशं किञ्चिदत्रापि कथयामि नृपोत्तम ।
समापनमृतुर्नित्यमाहोरात्रपूर्ववत् ॥ ३० ॥
लभ्यादि शोधयेद्वत्स[2] । सर्वकामप्रद[3] यदा ।
सर्गाग्रेषु च कार्येषु भक्तियुक्त त्वयि शुभ ॥ ३१ ॥
तथा दर्वी च द्रष्टव्या यथा भवेन्ना शिवा ।
तत्र[4] भूता महा नागास्त्रिविधापि शिवानुगा ॥ ३२ ॥
स्थूलरूपा तु सा सर्वा तुष्टा दर्वी महाफला ।
कालादिबलिगन्धादिप्रतिष्ठा वत्स । कारयेत् ॥ ३३ ॥
यथा सम्पत्तिसम्पन्न सर्वकाल प्रदापयेत् ।
तदा मातृमहान् भूतांल्लोकपालान्निवेशयेत् ॥ ३४ ॥
हैमान् राजतताम्रान् वा स्वनिवेशोपलक्षितान् ।
वर्णपुष्पबलिगन्धदक्षिणादि यथाक्रमम् ॥ ३५ ॥
मातृणां लोकपालानां महाणां च यथाविधि ।
हृदयेन प्रदेयं च मूलमन्त्रैः पुरातनैः ॥ ३६ ॥
अथवा सर्वसामान्यान्[5] वैदिकानपि[6] कारयेत् ।
अथर्वविधिना मन्त्रान् पूर्वोक्तान्वा यथा पुरा ॥ ३७ ॥
प्रभूतमन्न नैवेद्यैर्भूरिदक्षिणसंयुतैः ।
कुर्याद् व्याहृतिहोमेन यत्तत्र[7] निवेशयेत् ॥ ३८ ॥
मूलमन्त्रेण देव्यास्तु श्रद्धाल हृदयेन तु ।
घृतं शिरसो मन्त्रेण शिखया चानुतापयेत्[8] ॥ ३९ ॥
कवचेन तथा वर्हि रचयित्वा प्रदापयेत् ।
अस्त्रेण नेत्रमार्गेण[9] सर्वं सर्वत्र निक्षिपेत् ॥ ४० ॥
लोकपालान् महानागान् द्वादशार्धेन पूजयेत् ।

---

१. चोदित for चोदिता RP, २ So RP, साधये० MS ३ So RP, ०प्रदा MS ४ So RP तत्र० MS ५ ०सामान्या for ०सामान्यान् RP ६ वैदिकीमपि for वैदिकानपि RP, ७ पात्रमत्र for यत्तत्र RP, ८ So RP, शिख याचानुतापयत् MS ९ ०मन्त्रेण for ० मार्गेण RP,

शिवाद्यान् सनकाद्यांश्च देवाद्यानपि पूजयेत् ॥ ४१ ॥
नित्येषु च महाप्राज्ञ ! नैमित्तिकविशेषतः ।
पञ्चकानि च सप्तानि नवकानि क्रियादिकैः ॥ ४२ ॥
अग्नेर्वर्णाश्च गन्धश्च शब्दश्चाकृतयस्तथा ।
विकाराश्च तदा वत्स ! बोद्धव्याः सिद्धयसिद्धिदाः ॥४३॥
तदन्ते वत्स ! सत्कार्या सर्वकामप्रदायिका ।
येन सान्निध्यमायाति सर्वहोमेषु मङ्गला ॥ ४४ ॥
सहस्रार्चिर्महातेजा नमस्ते बहुरूपिणे ।
नमस्ते नीलकण्ठाय पीतवासाय पावक ! ॥४५॥
स्रुवमेखलहस्ताय ब्रह्माण्डं दहते[1] नमः ।
सर्वाशिने सर्वगतपावकाय[2] नमो नमः ॥ ४६ ॥
उमाय उग्ररूपाय स्त्रीलिङ्गाय स्वतेजसे ।
वस्वश्विनिरूपाय सर्वाहाराय वै नमः ॥ ४७ ॥
त्वं रुद्र घोरकर्मासि घोरहा परमेश्वर !
विष्णुस्त्वं जगतां पालो ब्रह्मा सृष्टिकरः स्मृतः ।
त्वं च सर्वात्मको देव ! लोकपालतनुः स्थितः ॥ ४८ ॥
इन्द्राय वह्नये देव ! यमाय पिशिताशिने ।
वरुणानिलसोमाय ईशदेवाय वै नमः ॥ ४९ ॥
सूर्याय चन्द्ररूपाय भूसुताय बुधाय च ।
बृहस्पतये शुक्राय सौरराह्वोश्च केतवे[3] ॥ ५० ॥
सर्वग्रहस्वरूपाय[4] व्यालमातररूपिणे ।
वृष्टिसृष्टिस्थितिविभूतिकर्त्रे च वरदाय च ॥ ५१ ॥
नमस्ते स्कन्दमातस्ते स्कन्दपित्रे नमो नमः ।
कुण्डे वा मण्डले वापि स्थण्डिले वाथवा[5] विभो ॥५२॥
महानसे वा त्वां देव ! हुत्वा इष्टं लभेन्नरः ।
घृतं क्षीरं रसं धान्यं तिलान् व्रीहीन् कुशान् यवान् ॥५३॥
भावादभावतो वापि सततं होमयेत्तु यः ।
एवं वित्तविहीनोऽपि नरो विगतकिल्बिषः ॥ ५४ ॥

---

१. So RP.; ब्रह्माण्डदहने MS. २. So RP; सर्वगते पावकाय MS. ३. सौरये राहुकेतवे for सौरराह्वोश्च केतवे MS. ४. So KP.; सर्वग्रहस्वरूपाय MS. ५. वाथ त्वां for वाथ वा RP.

किं पुनर्नित्यहोमे तु वसोर्धारा हुताशने ।
सर्वमङ्गलमन्त्रेण आहुतिं सम्प्रदापयेत् ॥ ५५ ॥
लोकपालग्रहाणां तु ओङ्कारेण नमोऽन्तकैः ।
स्वै. स्वैर्मन्त्रैश्शेषाणां होमः कार्यो नृपोत्तम! ॥ ५६ ॥
अन्नं चित्रं विशुद्धं च संस्कृतं घृतपायसैः ।
होमयेद्विधिवद्विप्रो वलिं चापि प्रदापयेत्[1] ॥ ५७ ॥
सितवस्त्रधरो भूप सनलः सद्वाहनः ।
पूजयेच्छत्ररत्नादीन् मातरं पितरं द्विजान् ॥ ५८ ॥
आचार्यान्बान्धवांल्लोकान् सर्वाश्रमरतारच ये ।
नटनर्तकवेश्याश्च कन्यका विधवाः स्त्रियः ॥ ५९ ॥
दीनान्धकृपणांश्चैव अन्नदानेन पूजयेत् ।
एवं निवेशनं कृत्वा नित्यं अर्घ्यं शतं शतम् ॥ ६० ॥
प्रातर्मध्याह्नसन्ध्यायां तत्र शान्तिः प्रकीर्तिता ।
भवतो नृप राष्ट्रस्य पूर्वोक्तफलदायकम् ॥ ६१ ॥
वसोर्धारानिवेशनविधि ।

ब्रह्मोवाच—तप्तहाटकवर्णाभ. सूर्यमिन्दुरकान्तिभृत् ।
मेघदुन्दुभिशङ्खानां कोकिलस्वनपूजितः ॥ ६२ ॥
कुङ्कुमागरुकर्पूरमदरोचनगन्धवान् ।
मांसैलाकुष्ठतगरसितगन्धी[2] च पूजित ॥ ६३ ॥
हंसच्छत्रेभगोकुम्भपद्माकृतिकरः[3] शुभ ।
सिंहबर्हिणशैलाना चामराकृतिरिष्टद. ॥ ६४ ॥
सधूमोऽमृतगन्धी च शुकास्यचरणोपमः ।
छिन्नज्वालोऽथ वा रोदी नेष्ट. सर्वेषु पावकः ॥ ६५ ॥
सुसंहतशिख शस्त ऊर्ध्वं प्रज्वलितोऽपि वा ।
लेलिहान शुभः कुण्डे[4] दीप्तिमान्वरदोऽनलः ॥ ६६ ॥
एवंविधः सदैवाथ यज्ञे वैश्वानरो हितः ।

---

१. So RP, वा विप्र दापयेत् MS २. ०गन्धिश्च for ०गन्धी च RP. ३. ०पद्माकरकृति. for ०पद्माकृतिकर RP., ४. कुन्द० for कुण्डे RP.,

यात्रायां शक्रकेतौ च सर्वकार्येषु सिद्धिदः ॥ ६७ ॥
न्यूना या वहते धारा मानात्सर्पिर्न सा शुभा ।
नाधिका शस्यते विप्र! दुर्भिक्षकलिकारिका ॥ ६८ ॥
प्रुस्यते वहमाना या शाम्यते वा हुताशनः ।
सापि चान्यं नृपं विच्छेद्या च धारा पतेद्वहिः॥ ६९ ॥
वस्रा[1] नदीमहारूपा मनोज्ञा प्रियकारिका ।
सुवर्णा हेमवर्णा च धारा राज्यविवृद्धये ॥ ७० ॥
सन्तता पतते या च तनोतीव च पावकम् ।
तनोति स नृपं राष्ट्रं[2] वसोर्धारा न संशयः ॥ ७१ ॥
सुगन्धि स्वस्थविमलकृमिकीटविवर्जितम् ।
शस्यते वसुधारायां सर्पिर्गव्यं च पूजितम् ॥ ७२ ॥
अभावाद्गन्धमाज्यं वा होतव्यं च सुशोभनम् ।
घृतक्षौद्रपयोधारा सर्वपीडानिवारिणी ॥ ७३ ॥
गण्डूचीशकलैर्होमः सहकारदलैः शुभः ।
अश्वत्थमालतीदूर्वा आयुरारोग्यपुत्रदाः ॥ ७४ ॥
सौभाग्यं च श्रियं देवी प्रयच्छत्यविचारणात्[3] ।
अर्काद्या[4] वा शुभा वत्स! सफलाः सार्वकामिकाः ॥७५॥
होतव्याः सर्वकालं तु सातत्यात्समिधो नृप ।
सर्वकालं घृतं प्रोक्तं निमित्ते च निमित्ततः ॥ ७६ ॥
विशुद्धे[5] सर्पिषो यानि तानि चात्र विचारयेत् ।
ज्वालावच[6] शुभं गन्धं सर्वहोमेषु लक्षयेत् ॥ ७७ ॥
संयतैः संयताहारैः सर्वशास्त्रार्थपारगैः ।
जपहोमरतैर्भूप ! धारा देया तु तद्विधैः ॥ ७८ ॥
पापण्डिविकलांल्लुब्धान् धर्मापेतबहिष्कृतान् ।
सर्वकालप्रवादांश्च न वदेन्नावलोकयेत् ॥ ७९ ॥
मृत्युञ्जयं तथा मन्त्रं चतुर्थ्यन्तं जपेत्तथा ।
भाग्यवान्नित्यहोमे तु अन्यथा विफलं भवेत् ॥ ८० ॥

---

१. अजुनादा for वस्रा नदी० RP. २. नृप राष्ट्रं सा for सा नृपं राष्ट्रं RP. ३. ०विचारणात् for ०विचारणा RP. ४. So RP.; आच्छाद्या MS. ५. So RP.; विशुद्धये MS. ६. So RP.; ज्वालावर्णं MS.

सामान्या या भवेद्धारा तत्र जप्यं शतं शतम् ।
प्रातर्मध्याह्नसन्ध्यासु सर्वकामसमृद्धये ॥ ८१ ॥
वसु द्रव्यं घृतं वाज्यममृतं हविष्कामिकम् ।
तस्य[1] धारा सदा देया वसोर्धारा हि सा मता ॥ ८२ ॥
वसुनापत्यकामेन दक्षेण च महात्मना ।
मया च विष्णुना शक्र ! रुद्रेण च सहोमया ॥ ८३ ॥
आत्मानं च स्वरूपेण धारायां तु प्रपातितम् ।
देवी सान्निध्यमायाता[2] सर्वकामप्रदायिका ॥ ८४ ॥
तस्मात्त्वमपि राजेन्द्र ! वसोर्धारां प्रदापय ।
नातः परतरं पुण्यं विद्यते नृपसत्तम ! ॥ ८५ ॥
वसोर्धाराप्रदानस्य एकाहमपि यद्भवेत् ।
नृपेण पुष्टिकामेन पराज्यजिगीषुणा[3] ॥ ८६ ॥
देया धारा सदा वत्स ! रिपुनाशाय विद्धि ताम् ।
विच्छेदो नित्यहोमस्य न कार्यस्तु कदाचन ॥ ८७ ॥
महादोषमवाप्नोति य. कुर्याद्विमुखान् सुरान् ।
द्रव्याभावे घृताभावे नृप ! तस्करजे भये ।
यदि नो वहते धारा तदा छिद्रं न विद्यते ॥ ८८ ॥
होमं कृत्वा क्षमापेत देव देवीं नृपोत्तम !
पुनः प्राप्ते भवेद्वत्स ! प्रतिष्ठा विधिचोदिता ॥ ८९ ॥
महत्याश्विनमासे तु अष्टमीनवमीषु च ।
कार्तिक्यां माघचैत्रे तु चित्रायां रोहणीषु च ॥ ९० ॥
वैशाख्यां तु प्रदातव्या ज्येष्ठा ज्येष्ठस्य सत्तम ।
आषाढे द्वादशी प्रोक्ता अष्टमी पूर्णिमा नभे ॥ ९१ ॥
नभस्ये रोहिणी वत्स ! चतुर्थ्यां भौमवासरे[1] ।
सङ्क्रान्तिषु च सर्वासु गुरुसौरभवासु च ॥ ९२ ॥
चन्द्रसूर्योपरागेषु प्रतिष्ठा यज्ञकर्मणि ।
पुत्रोत्सवे प्रदातव्या जन्मपुष्याभिषेचने ॥ ९३ ॥
मार्गे व्रतनिबन्धे तु सुघोरे केतुदर्शने ।

---

१. So RP , तत्र MS २ So RP., सा नित्य० MS. ३. So RP., युवराज्य० MS.

गृहकृत्योपसमने धारा देया शुभावहा ॥ ६४ ॥
एवं यो वाहयेद्धारां शास्त्रदृष्टेन कर्मणा ।
तस्य भूः सिच्यते सर्वा सनगा सहसागरा ॥ ६५ ॥
अश्वमेधसम पुण्यं दिनहोमात्प्रजायते ।
वाजपेयशतं रात्रावग्निष्टोमशतं तथा ॥ ६६ ॥
आधयो व्याधयस्तस्य न भवन्ति कदाचन ।
आयुरारोग्यमैश्वर्यं तदन्ते च सुखी[१] भवेत् ॥ ६७ ॥

इति श्रीमद्गोविन्दचन्द्रमहाराजसान्धिविग्रहिकश्रीलक्ष्मीधर-
भट्टविरचिते कृत्यकल्पतरौ राजधर्मकाण्डः
सम्पूर्णः ॥

---

१. शिवो for सुखी RP.